पिशुन—betraying, indicating 50.

पुट—m. fold, cover, 107 पुष्कर—n. the skin of a drum, 68

पुष्करावर्तक—m. a cloud which causes the destruction of the world, the diluvian clouds ; पुष्करं जलम् आवर्तयन्ति भ्रमयन्ति इति ; cf. छन्नं मेघैर्नभोगगनतलं पुष्करावर्तकाद्यैः, Veṇīsamhāra, III, 5, 6

पुष्पलावी—f. a female flower-gatherer or garland-maker, 28

पेलव—tender, 92 पेशल—beautiful, lovely, 76

प्रकृतिपुरुष—m a minister, 6 प्रतनु—scanty, 30 ; minute, small, 103

प्रतिनव—new, fresh, 38

प्रत्यादेश—m. rejection, abstention from, 94

प्रत्याश्वस्त—refreshed, revived, comforted, 97

प्रत्युद्यात—met, received, 24

प्रधन—n. a battle, war, 50 प्रसव—m. a flower, 67

प्रालेय—n. hoar-frost, dew, 41

प्रियसख—for conventional friendship, cf. मेघ-पर्वतयोरब्ज-सूर्ययोरब्धि-चन्द्रयोः । शिखिजीमूतयोर्मैत्री वातासयोश्च स्वभावतः ॥

फलक—n. a slab, pedestal, 78

बलाका—f. female heron, 9

बलि—m. an oblation, worship, 57, 84 , Name of a king, 59

बिस—n. the fibrous stalk of the lotus, 11

भक्ति—f. cutting, forming, shapes, 62 ; painted figure, ornament, 19 ; devotion, worship, 38, 57 ; भक्तिच्छेदैः—by ornamental drawings ; cf. Kumāra. viii. 69.

भृगुपति—m name of Paraśurāma, 59

मण्डल—n. a circle, curve, 38

मन्द्र—deep, 98

महाकाल—m. name of a temple of Śiva at Ujjain, 36

महिमा—greatness, here superhuman power, I

माधवी—f. the spring-creeper (Gaertnera Racemosa), 17

*माल—n. an alluvial plateau, 16 ; relating to Māla Deśa

मुक्ताजाल—*n. a string of pearls knitted in the form of a net*, 95

मुखपट—m. a veil, a face-cloth, 94

मुरज—m. a kind of drum, 58 66 मूर्छना—f. melody, 85

मेघालोके—cf. Ṛtus. II. 1

मेचक—dark-blue, black, 61. मोघ—barren, 6

यन्त्रधारागृह—n. the condition of a room fitted up with a shower-bath, 61

यूथिका—cf. Vikram IV. 24

रशना—f. a girdle, 37

राजन्य—m. a man of the Ksatriya caste, 50

राजराज—the king of *Yaksas*, 3

रेवा—रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका ॥

रोधस्—n. a bank, shore, 43

वप्रक्रीडा—f. the playful butting of an elephant against a bank or mound, 2

बर्ह—m. n a feather of a peacock's tail 15, 46, 103

वलभि—a roof, turret, 40

वाणीर—m. reed, cane, 43

वान्त—vomitted, discharged, 21

विभ्रम—m. playful movement, amorous gesture, coquetry, 30 49, 73

विमान—m. n. a seven storied mansion, palace (free from anger), 65, 71

विशाला—f. the city of *Ujjain*, 32

वीणिन्—holding a lute, 47

शब्दाश्रेय—fit to be spoken aloud, 102

शरभ—a fabulous animal with eight legs, 56

---

* v. r. मालं

शरवणभू—Kartika, born in a thicket of reeds, 47

शिखादामन्—n. a wreath worn on the top of the head, 90

शुक्लापाङ्ग—m (having white eye-corners), peacock, 24

श्याम—tender, youthful, 81

श्यामा—f. a kind of creeper called Priyangu), 103

श्रोणी—f. the hip and loins, 81

सानु—m. n a summit, ridge, table land on the top of a mountain, 2, 80

सारङ्ग—m. the spotted deer, an antelope, 22

सीर—m. n. a plough, 16

स्तिमित—fixed, steady, unmovable 38, 61

हाला—f. liquor, 51

महाकवि-कालिदास-विरचितं

# मेघदूतम्

## पूर्वमेघः

कश्चित् कान्ताविरहगुरुणा स्वाधिकारप्रमत्तः
शापेनास्तङ्गमितमहिमा वर्षभोग्येण भर्तुः ।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥ १ ॥

## भरतसेन-कृता सुबोधा

नत्वेशं वंशगौराङ्गमङ्घ्रिनखसमुद्भवं ।
भरतो मेघदूतस्य टीकां रचयति स्फुटम् ॥
सन्त्येव मेघदूतस्य टीका बहुभिः कृता ।
तथापीयं सुबोधाख्या क्रियते भू [मुदा] मया ॥

कालिदासो महाकविर्मेघदूताख्यं खण्डकाव्यं चिकीर्षुः —

खण्डकाव्यमुपकुर्यात् कश्चिदित्यादिभिः पदैः ।
सर्गबन्धस्त्ववस्यन्तु नाम काव्यं सुशोभनम् ॥

स्निग्धाश्छायातरवो रक्तावृक्षा यत्र तेषु ; किंवा स्निग्धश्छायातरवः पङ्क्त्युपलक्षिता वृक्षा श्रेणीभूतवृक्षा वृक्षश्रेण्यो यत्र तादृशेषु , किंवा छाया शोभा पुष्पफलादिसमृद्धिरूपा तत्प्रधानास्तरवो येषु तेषु ; किंवा छायायै शोभायै तरवश्छायातरवस्ते स्निग्धा यत्र तेषु , स्निग्धश्छायातरवो वटवृक्षा यत्र तेषु , वटवृक्षा हि यक्षवासाः, 'यक्षस्तु राजा वटवृक्षवासी" ति हारावलीत्यन्ये । कश्चिदिति "कथादौ जन्तु सप्तमी स्यात् कश्चिदित्यादिभिः पदैः" रित्युक्तः कश्चिदित्युक्तम् । अस्य यक्षस्य स्वामिद्रोहित्वात् नामनिर्देशो न कृत । उक्तञ्च—

"मित्रद्रोहं प्रकुर्वन्ति ये च विश्वासघातकाः ।
तेषां नाम न गृह्णन्ति पद्यादौ च विशेषतः ॥" इति ।

अभिशप्तत्वादस्य नाम न गृहीतमिति केचित् । "अस्ति कश्चिद्वाग्विशेष" इति वनितोक्त्युपरोधात् कश्चिदित्युक्तमिति केचित् । अस्य काव्यस्य कल्पितत्वात् न नाम निर्देश इति कश्चित् तन्न, एतत्प्रस्तावस्य प्रसिद्धत्वात् । कश्चिदित्येव यक्षस्य नामेति केचित् । कान्तेति कान्तियोगात् कान्ता, अर्श आदित्वादत् । कान्ति शोभा, सा यथा,

"रूपयौवनलावण्यैरुपभोगोपबृंहितैः ।
अलङ्करणमङ्गानां शोभेति परिकीर्तिता ॥" इति ।

ईदृशनायिकाविरहे युक्तं शापस्य महत्त्वम् । स्वाधिकारप्रमत्त इत्यनेन शापस्य युक्तता ज्ञापिता । अस्तंगमितमहिमेत्यनेन व्यवहितवस्तुदर्शनादावशक्तिः सूचिता । वर्षभोग्येण इत्यनेन वियोगिनामेकोऽपि ऋतुर्दुःसहः किंपुनः षड्ऋतुरूपः संवत्सरः इति शापस्यातिशयदुःसहत्वं सूचितम् । किंवा अस्तंगतस्य सूर्यादेरिव अस्य यक्षस्य पुनरुदयः शापान्तेऽवश्यं भवतीति सूचितम् । भर्तुरित्यनेन यक्षसम्बन्धात् कुबेरोऽवगम्यते, एवं यक्षस्य कुबेरानुचरत्वमपि । यक्ष इति रूढमपि स्वाभाविककामित्वं प्रतिपादयति, इः कामम् अश्नातीति एवं निपातात्, इरक्षयो यस्य च, एवं इयुकामक्षमिन्द्रियं यस्येति च व्युत्पत्ते, तेन कान्ताविरहेऽधिकव्याकुलता प्रतिपादिता । जनकतनयास्नानेत्यनेन स्थानस्यातिपवित्रत्वं मनोहरत्वं वासयोग्यत्वञ्च सूचितम् । स्नानमिति भावे करणे वा अनट्, "स्नानीयेऽभिषवे स्नान" मिति रन्ति ।

"सुगन्धौ सुव्रते पूते पुण्यं शोभन उच्यते" इति संसारावर्त ।

स्निग्धेत्यनेन विरहियोग्यशीतलस्थानकिसलयशय्यादिशीलस्य विरहजन्यदुःसहदाहादिकञ्च सूचितम् ।

"सुशीतानि सुगन्धीनि वनानि च सरांसि च ।
सम्भोगेष्वनुकूलानि दहन्ति विरहे स्त्रियम् ॥" इति भरत ।

"छायातरुः स्थिरच्छायः" इति त्रिकाण्डशेष ।

"मध्याह्नस्थितेऽप्यर्के छाया येषामवस्थिता ।
स्तम्भिता इव तिष्ठन्ति ते च्छायातरवो मताः ॥" इति रन्ति ।

छायातरुः सदा पूर्णः पुष्पैः किसलयैः फलैः" इत्यन्य. । "छायातरुर्नमेरुः स्यात्" इति धल' ।

"छाया पङ्क्तौ प्रतिमायामर्कयोषित्यनातपे ।
उत्कोचे चाप्यनारम्भे शोभायाञ्च तमस्यपि ॥" इति विश्वलोचन ।

रामगिर्याश्रमेष्विति बहुवचनेन विरहसन्तापवशादेकत्र स्थातुमशक्यत्वं सूचितम् । रामगिरिश्चित्रकूटस्य नातिविप्रकृष्टः दक्षिणस्यां दिशि प्रसन्नतोयो रामगिरित्येव नाम्ना प्रसिद्धः । अतएव रामगिर्याश्रमेष्विति श्रुतिकटुवेति प्रयुक्तं न तु रामशैलेति मुग्धधियि प्रयुक्त । उक्तञ्च "प्रसिद्धस्थापने यत्तु दुष्टवत्तदपीष्यते" इति ।

रामगिरिर्माल्यवान्, यथा प्राक् प्राप्तप्रियाविरहो रामः सुग्रीवस्याश्वासेन प्राप्तजीविताश्वासोऽभूत्तथाऽहमपि कस्यचिदाश्वासेन तथा स्यामित्यभिप्रायेण तस्याश्रमेषु वासः कृत इत्यन्ये। किन्तु तत्र माल्यवति ससीतस्य रामस्यानवस्थानात् जनकतनयास्नानपुण्योदकेष्विति विशेषण न घटते। अपरे तु चित्रकूटे ससीत एव रामस्तस्थौ, चित्रकूटत्यागानन्तरमेव सीताहरणम् अतएव रामगिरिश्चित्रकूट एवेत्याहुः, किन्त्वत्र "स्थानादस्मात् सरसनिचुलादुत्पतोदङ्मुखः खम्" इत्युक्त्वा कियद् वर्णयित्वा "अध्वक्लान्तं प्रतिमुखगतं सानुमांश्चित्रकूट" इत्युक्तं न सङ्गच्छते। केचित्तु इह कश्चिद् वसतिं चक्रे इत्यनेन वस्तुनिर्देशात् विदिशादिनगर-रेवादिनदी-सूर्यादिवर्णनाच्च महाकाव्यमिदमित्याहुः। तदयुक्तम्, तथाहि "सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम्-आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्" इति सर्गबन्धो महाकाव्यस्य प्रधानं लक्षणम्, अत्र तु तदभावः, तस्मात् खण्डकाव्यत्वमस्य न्याय्यमेव। तथा च **काव्यप्रदीपः**। "एकदेशानुसारेण खण्डकाव्यं विधीयते" इति···। स्वभावोक्तिरलङ्कारः, तथाच

नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती।
स्वभावोक्तिश्च जातिश्चेत्याद्या साऽलंकृतिर्मता॥" इति।

अत्र सर्वत्र विप्रलम्भाख्यः शृङ्गारो रसः, मन्दाक्रान्ता छन्दः। इतिहासस्तथा प्रसिद्धापि नवार्था लिख्यते, यथा—कुबेरो मानससरोवरसम्भवकनककमलपरिरक्षणार्थं यं यक्षं नियोजयामास स जातु कान्तया सह क्रीडासक्ततया एक [स्यां] रात्रौ निजगृहे स्थितः, अस्मिन्नवसरे दिग्गजा आगत्य मानसमालोडयामासुः। ततो यक्षराजः क्रुद्धः स्वाधिकृतया पद्मरक्षा न कृता तस्त्वं स्त्रीविरही ध्वस्तमहिमा च भवेति तं शशाप। ततस्तदनु-नयेन कातरकरुणः शापस्य वर्षावधिस्थितित्वं चकारेति॥ १॥

**तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी**
**नीत्वा मासान् कनकवलयभ्रंशरिक्तप्रकोष्ठः।**
**आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं**
**वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श॥ २॥**

यक्षस्य विरहव्याकुलतया मान्द्यं वर्णयितुं मेघसमयनवतारयन्नाह।—**तस्मिन्**। स यक्षस्तस्मिन् तादृशे अद्रौ पर्वते रामगिरौ कतिचित् मासान् नीत्वा गमयित्वा आषाढस्य प्रथमदिवसे आद्ये दिने मेघं ददर्श। स कीदृशः? अबलया प्रिया विप्रयुक्तो विरहितः तथा कामी गौरिन्द्रियैः प्रियानुभवसिक्तलग्न-चित्तत्वात्।

स्निग्धाश्छायातरवो वृक्षा यत्र तेषु ; किंवा स्निग्धाश्छायातरवः पङ्क्त्युपलक्षितवृक्षाः श्रेणीभूतवृक्षा वृक्षश्रेण्यो यत्र तादृशेषु ; किंवा छाया शोभा पुष्पफलादिसमृद्धिरूपा तत्प्रधानास्तरवो येषु तेषु ; किंवा छायायै शोभायै तरवश्छायातरवस्ते स्निग्धा यत्र तेषु ; स्निग्धाश्छायातरवो वटवृक्षा यत्र तेषु ; वटवृक्षा हि यक्षावासाः, "यक्षस्तु राजा वटवृक्षवासी" ति हारावलीत्यन्ये । कश्चिदिति "कथायोजनन्तु बध्नीयात् कश्चिदित्यादिभिः पदै" रित्युक्तेः कश्चिदित्युक्तम् । अस्य यक्षस्य स्वामिद्रोहित्वात् नामनिर्देशो न कृतः । उक्तञ्च—

"मित्रद्रोहं प्रकुर्वन्ति ये च विश्वासघातकाः ।
तेषां नाम न गृह्णन्ति पद्यादौ च विशेषतः ॥" इति ।

अभिशप्तत्वादस्य नाम न गृहीतमिति केचित् । "अस्ति कश्चिद्वाग्विशेष" इति वनितोक्त्युपरोधात् कश्चिदित्युक्तमिति केचित् । अस्य काव्यस्य कल्पितत्वात् न नाम निर्देश इतिकश्चित् तन्न, एतत्प्रस्तावस्य प्रसिद्धत्वात् । कश्चिदित्येव यक्षस्य नामेति केचित् । कान्तेति कान्तियोगात् कान्ता, अर्श आदित्वादच् । कान्तिः शोभा, सा यथा,

"रूपयौवनलावण्यैरुपभोगोपबृंहितैः ।
अलङ्करणमङ्गानां शोभेति परिकीर्तिता ॥" इति ।

ईदृशनायिकाविरहे युक्तं शापस्य महत्त्वम् । स्वाधिकारप्रमत्त इत्यनेन शापस्य युक्तता ज्ञापिता । अस्तंगमितमहिमेत्यनेन-व्यवहितवस्तुदर्शनादावशक्तिः सूचिता । वर्षभोग्येण इत्यनेन वियोगिनामेकोऽपि ऋतुर्दुःसहः किंपुनः षड्तुत्वः संवत्सर इति शापस्यातिशयदुःसहत्वं सूचितम् । किंवा अस्तगतस्य सूर्यादेरिव अस्य यक्षस्य पुनरुदयः शापान्तेऽवश्यं भवतीति सूचितम् । भर्तुरित्यनेन यक्षसम्बन्धात् कुबेरोऽवगम्यते, एवं यक्षस्य कुबेरानुचरत्वमपि । यक्ष इति रूपमपि स्वाभाविककामित्वं प्रतिपादयति, इं कामम् अक्षतीति एवं निरुक्तात्, इरक्षयो यस्य च, एवं इयुक्तमक्षमिन्द्रियं यस्येति च व्युत्पत्तेः, तेन कान्ताविरहेऽधिकव्याकुलता प्रतिपादिता । जनकतनयास्नानेत्यनेन स्थानस्यातिपवित्रत्वं मनोहरत्वं वासयोग्यत्वञ्च सूचितम् । स्नानमिति भावे करणे वा अनट्, "स्नानीयेऽभिषवे स्नान" मिति रन्तिः ।

"सुगन्धौ सुव्रते पूते पुण्यं शोभन उच्यते" इति **संसारावर्तः** ।

स्निग्धेत्यनेन विरहियोग्यशीतलच्छायकिसलयशय्यादिसौलभ्यं विरहजन्यदुःसहदाहादिकञ्च सूचितम् ।

"सुशीतानि सुगन्धीनि वनानि च सरांसि च ।
सम्भोगेष्वनुकूलानि दहन्ति विरहे भृशम् ॥" इति **भरतः** ।

"छायातरुः स्थिरच्छाय" इति **त्रिकाण्डशेषः** ।

"मध्याह्नसंस्थितेऽप्यर्के छाया येषामवस्थिता ।
स्तम्भिता इव तिष्ठन्ति ते च्छायातरवो मताः ॥" इति **रन्तिः** ।

छायातरुः सदा पूर्णः पुष्पैः किमल्पैः फलैः" **इत्यन्यः** । "छायातरुर्नमेरुः स्यात्" इति **बलः** ।

"छाया पङ्क्तौ प्रतिमायामर्कयोषित्यनातपे ।
उत्कोचे चाप्यनारम्भे शोभायाञ्च तमस्यपि ॥" इति **विश्वलोचनः** ।

रामगिर्याश्रमेष्विति बहुवचनेन विरहसन्तापवशादेकत्र स्थातुमशक्यत्वं सूचितम् । रामगिरिश्चित्रकूटस्य नातिविप्रकृष्टो दक्षिणस्यां दिशि प्रत्यन्तपर्वतो रामगिरित्येव नाम्ना प्रसिद्धः । अतएव रामगिर्याश्रमेष्विति श्रुतिकटुत्वेऽपि प्रयुक्तं नतु एकार्थेऽपि सुपन्थाः प्रयुक्तं । उक्तञ्च "प्रसिद्धज्ञापने यत्तु दुष्टवत्तदपीष्यते" इति ।

तस्य स्थित्वा कथमपि पुरः केतकाधानहेतो-
रन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ ।
मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः
कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ॥ ३ ॥

अथ तात्कालदेशोपस्थापितावस्थोऽसौ निर्वेदवान् जात इति ध्वनयन्नाह । तस्य । राजराजस्य कुबेरस्य अनुचरो यक्षोऽन्तर्बाष्पोऽन्तर्गताश्रुः सन् केतकीपुष्पस्य यदाधानम् आरोपणं तस्य हेतोर्वर्षासु तदुत्पद्यमानत्वात् कारणस्य तस्य मेघस्य पुरः कथमपि मेघदर्शनस्य विरहिणामुन्मादकत्वात् केनापि प्रकारेण महाकष्टेन स्थित्वा चिरं दध्यौ चिन्तितवान् निर्वेदवान् बभूवेत्यर्थः । बाष्पसहचरितेन ध्यानेन निर्वेदस्य ध्वनितत्वात् । तथाच ।

"बाष्पपरिप्लुतनेत्रः श्वासनिःश्वासखिन्नमुखवर्णः । योगीव ध्यानरतो भवति हि निर्वेदवान् पुरुषः ॥" इति ।

युक्त एवास्य निर्वेदः । तथाच

"इष्टजनविप्रयोगाद्दारिद्र्याद्व्याधितस्तथा दुःखात् । परवृद्धिं दृष्ट्वा वा निर्वेदो नाम सम्भवती" ति ।

प्रस्तुतनिर्वेदसाधनमर्थान्तरन्यासमाह—मेघेति । कण्ठाश्लेषप्रणयिनि गलालिङ्गनाभिलाषिणि जने प्रियजने सत्यपि सुखिनः सम्भोगिनः सुरतभाजोऽपि चेतो मेघस्यालोके दर्शने भवति विद्यमाने अन्यथावृत्ति विकारचेष्टं किमुत भवतीत्याक्षेपात् । मेघालोके भवतीति वा वाच्यम् । कण्ठाश्लेषप्रणययोग्ये जने दूरसंस्थे वियुक्ते सति किं पुनः किं न स्यात् अपि तु अन्यथा स्यादेवेत्यर्थः । केतकेति केतकानां काष्ठस्वभावानामचेतनानामपि विकारकारित्वेन विरहिदुःसहत्वं मदनबाणकारणतया दुर्दर्शत्वं ध्वनितम् । अत एव कथमपीत्युक्तम् । अन्तरभ्यन्तरे बाष्पोऽश्रु यस्येति बहुव्रीहिः । ननु उद्वेगे सति निर्गताश्रुत्वमेव युक्तं कथमन्तर्बाष्पत्वम् ? सत्यं धैर्यावलम्बनात् । महतां हि विरहस्थितौ धैर्यमेवोचितम् । कथमपि [ कथञ्चिदपि ? ] धैर्यमेव हेतुः, चिरचिन्ता बाष्पत्वे हेतुरित्यन्ये । बाष्पस्याप्रतिसम्भवः । यदुक्तं—

नानिति सूचितमिति केचित् । वास्तवन्तु मेघदर्शनं याहच्छिकम् । तस्मिन्निति तच्छब्दस्य पूर्वोक्तरामगिर्याश्रमपरामर्शित्वात् तेषु रामगिर्याश्रमेष्विति वक्तुं युक्तं न तु तस्मिन्नद्राविति । उच्यते, सर्वनाम्ना समासान्तर्गतस्यापि अनुसन्धानमिच्छन्ति, अतो व्यवहितस्यापि गिरेरेवानुसन्धानादेकवचनम् । यद्यपि कतिचिन्मासानिति सङ्ख्या नाभिहिता तथापि 'अष्टौ मासा बोद्धव्याः', "शेषान् मासान् गमय चतुर" इति वक्ष्यमाणत्वात् । ननु कतिचिच्छब्दोऽल्पवचनः, तेन च बहवो मासा गीताः अतः "शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ" विति वक्ष्यमाणं विरुध्यते । नैवम्, अतिदुःसहत्वान्नेतव्यकालस्याल्पस्यापि बहुत्वेन समर्थनात् । तथाच—

"प्रचुरेऽपि गते काले कामिनामल्पवासना ।
नेतव्ये त्वल्पकालेऽपि घोरत्वाद् बहुवासना ॥" इति ।

ननु अबलाविप्रयुक्त इत्यस्य कान्ताविरहगुरुणेत्युक्तत्वात् पुनरुक्तं दोषः । उच्यते, अबलाशब्दोऽयं स्त्रीमात्रवचनः, अन्यस्त्रीभिरपि तस्य सङ्गमो नास्तीत्यर्थः । "स्त्री योषिदबला योषा" इति पर्यायः । अथवा यत एव कान्ताविरहगुरुः शापः अत एवाबलाविप्रयुक्तः । उत्क्षेपोऽयमलङ्कारः । तथाच—

"उत्क्षेपः क्वचिद्धेतोः फलभावेन योजनम् ।
क्वचिदाक्षेपलब्धस्य साक्षाच्छब्देन कीर्तनम् ॥" इति ।

अन्यत्तु अबला दुर्बला इति कान्तावैक्लव्यंच ध्वनितम् । कामीति अतिशयेऽस्त्यर्थे इन् । कनकेति वलयस्य कनकमयत्वात् कनकाद व्यर्थमिति न वाच्यं, करिकरभवत् साक्षाच्छब्देन कीर्तनादुत्क्षेपालङ्कारानिष्कारणत्वात् । आश्लिष्टेति आश्लिष्टसानुत्वेन मेघस्य सौहार्दं सूचितम् । वप्रेति मत्तगजवत् प्रेक्षणीयत्वेन सामर्थ्यंच सूचितं, सौहार्दसामर्थ्यवताऽनेन कार्यं साध्यते इति । गजप्रेक्षणीयमिति समासोपमेयं, समारोपेणैवोपमेयभावस्य प्रतीयमानत्वात् । तथाच—

परिहृता प्रत्युद्गमाद्दूरतः" इति अमरुः। "कृष्णौ स्यन्दनसंस्थितौ शरशतैर्गङ्गासुतोऽताडयत्" इति बाणः। केचित्तु संपूर्वतिष्ठतेरमङ्गलार्थत्वपुरस्कारेण तस्य कान्तायाममङ्गलाशङ्का सूचितेत्याहुः। केचित्तु तस्य मेघस्यानुचरः पार्श्ववर्ती सन् राजराजस्य पुरोऽलकाया दध्यौ, पुर इति कर्मणि षष्ठी। राजराजस्येति योग्यपदोपादानेन तस्य राजधान्या नृत्यगीत-वाद्यादिभिरुत्कृष्टत्वाद् ध्यानं युक्तमिति व्याचक्षते। अर्थान्तरन्यासोऽयम्—

"ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किञ्चन।
तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः॥ इती दण्डी।

अर्थान्तरन्यासद्योतकाभावात् स्वभावोक्तिरियमित्यन्ये। ॥ ३ ॥

**प्रत्यासन्ने नभसि दयिताजीविताल्म्बनार्थी**
**जीमूतेन स्वकुशलमयीं हारयिष्यन् प्रवृत्तिम्।**
**स प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै**
**प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार॥ ४॥**

चिन्तानन्तरमस्य चेष्टामाह—प्रत्या। जीमूतेन मेघेन प्रवृत्तिं हारयिष्यन् नाययिष्यन् प्रस्थापयिष्यन् स यक्षः प्रीतः सन्तुष्टः सन् तस्मै उक्तविशेषाय जीमूताय प्रीतिः स्नेहः प्रमुखं प्रधानं यत्र तादृशं वचनं 'कल्याणवानसि' 'कुशलं ते' 'इहैव विश्रम्यताम्' इत्यादिरूपेण कथनं यत्र तादृशं स्वागतं कुशलप्रश्नं व्याजहार उक्तवान्। प्रीतिप्रमुखवचनं यथा स्यात् तथा स्वागतं सुखेनागतमागमनं व्याजहारेति वा। कीदृशीं प्रवृत्तिं? स्वकुशलमयीं स्वात्मकल्याणात्मिकाम्। अत एव प्रत्यासन्ने सन्निहिते नभसि श्रावणे दयितायाः प्रियाया जीवितस्य प्राणधारणस्यावलम्बनमवष्टम्भः स्थैर्यमर्थः प्रयोजनं यस्यास्तादृशीं, कदाचित् श्रावणस्य प्रबलविरहपीडादायित्वात् प्राणांस्त्यक्ष्यतीत्याशङ्क्य विरहिण्याः कान्तवार्ताश्रवणस्य प्राणधारकत्वात् स्ववार्तां प्रस्थाप्यत इति भावः। प्रसङ्गतः स्वविरहावस्थापि सन्देष्टव्या। तस्मै कीदृशाय? प्रत्यग्रैरभिनवैरपर्युषितैः कुटजकुसुमैर्गिरिमल्लिकापुष्पैः कल्पितो निर्मितोऽर्घः पूजाविधिर्यस्मै तादृशाय कृतपूजायेत्यर्थः। जीमूतेनेत्युचितपदोपन्यासः, जीवनं जलं जीवितस्य मूतं बद्धमनेनेति जीमूत इति व्युत्पत्तेः। जीमूतः पृषोदरादिः। हारयिष्यन्निति तुमर्थे स्यतृः, हारयितुमित्यर्थः। तुमर्थाभावेऽपि न क्षतिः। प्रत्यग्रैरित्यादरध्वनिः। कश्चिदप्रीतोऽपि धूर्तत्वात् प्रियं वदति, कश्चित् प्रीतोऽपि शाठ्यत्वात् परुषं वदतीति प्रीतः प्रीतिप्रमुखवचनमिति न पुनरुक्तम्।

"स्वयमुपस्थिते मित्रे कुशलेनागतं त्वया।
इति यत् प्रश्नवचनं तत् स्वागतमुदाहृतम्॥" इति यल्लः।

स्वागतं क्षेमं शोभनागमनं कुशलप्रश्नश्चेति वृद्धाः। ४॥

**धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः**
**सन्देशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः।**
**इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे**
**कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु॥ ५॥**

ननु मेघेऽचेतनः कथं वार्ताहारक इति चतुर्भिरन्वाम दृष्टान्तमिदम्, मदुष्यम्—

वर श्रेष्ठ। यदि तु वर प्रशस्तमित्युच्यते तदा सामान्योपक्रमेण विशेषाभिधान यथा द्विगुरेकवचनमिति, एतच्च द्विगुसूत्रेऽनुन्यासे उक्तमिति टीकाकाराः। हेत्वलङ्कार अर्थान्तरन्यासो वा ॥६॥

**सन्तप्तानां त्वमसि शरणं तत् पयोद प्रियायाः**
**सन्देशं मे हर धनपतिक्रोधविश्लेषितस्य।**
**गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां**
**बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या ॥ ७ ॥**

मेघस्य पार्थ्यं प्रतिपादयन् याच्ञामाह—सन्त। हे पयोद मेघ, यतस्त्व सन्तप्ताना शरण रक्षितासि तत् तस्मात् धनपते कुबेरस्य क्रोधेन कर्त्रा विश्लेषितस्य वियोजितस्य मे मम प्रियाया सन्देश हरिष्यसि प्रापयिष्यसि। तत्र सन्देश नीत्वा कुत्र गन्तव्यमित्याह। बाह्ये बहिर्भवे उद्याने आरामे निर्गमदेशे वा स्थितस्य हरस्य महादेवस्य शिरश्चन्द्रिकया ज्योत्स्नया धौतानि प्रक्षालितानि उज्ज्वलीकृतानि हर्म्याणि धवलगृहाणि यस्या तादृशी अलका नाम यक्षेश्वराणा यक्षश्रेष्ठाना वसतिर्निवासस्थान ते तत्र गन्तव्या गमनीया। सन्तप्ताना शरणमिति सामान्यप्रतीतत्वाद् विरहिसन्तापशान्त्येऽपि त्व प्रभु, तन्निवेदितावस्थस्य ममापि प्रियाया कृते सन्देशमवश्य हरिष्यसीति भाव। "शरण गृहरक्षित्रो"रित्यमरः। हरेत्याशसाया भविष्यति गी। हेतुमम्मोऽयमर्थान्तरन्यास,

यदाह,— "अन्यतो दृष्टमम्बन्धस्याभीष्टे विनियोगत।
प्रसन्नप्रणयावेदि सता हेतुमम मतम् ॥" इति।

पयोदेत्युचितपदन्यास जलस्य तापशान्तिहेतुत्वात्, सन्तापशरणाभ्युपपत्त्या पयोदपदेन महानुभावताध्वनि।

यदुक्तं,— "दानमभ्युपपत्तिश्च सदा च प्रियभाषणम्।
स्वे जने वा परे वापि तदौदार्यमुदीर्यते ॥" इति।

धनपतिक्रोधविश्लेषितस्येत्यनेन परवशत्व तत्र गमनासामर्थ्यञ्च ध्वन्यते। प्रियाया इति सम्बन्धे षष्ठी, प्रियाया सकाशात् क्रोधविश्लेषितस्य इति योजयन्त्यन्ये। गन्तव्येति कर्मणि तव्य, ते इति कर्तरि षष्ठी। गन्तव्येत्यनेनाय शासनहारको दूत इति ज्ञापितम्। उक्तञ्च,—

"निसृष्टार्थो मितार्थश्च तथा शासनहारक।
सामर्थ्यात् पादतो हीनो दूतस्तु त्रिविधो मत ॥" इति।

अर्हार्थे तव्य, गन्तुमर्हति गन्तव्या, गमनार्हत्वेन तत्र त्रिवर्गफलावाप्तिर्ध्वन्यते। तथाहि तत्र साक्षात् शिवदर्शनाद् धर्म, यक्षेश्वरसम्बन्धादर्थ। तथा च "हृष्य यक्षेश्वरगृह्य जनानां निधिदायिन" इति। काम सुलभो धौतहर्म्यत्वात्। तथाहि—

"ज्योत्स्नोज्ज्वले हर्म्यपृष्ठे तथोद्याने सर सु च।
प्रासाना रमणीयेषु काम सजायते नृणाम् ॥" इति।

एतेन त्रिवर्गसाधनेन प्रोत्साहनम् उच्यतेऽनेति। वसति औणादिकोऽति। नामेति प्रसिद्धौ, अलकेति प्रसिद्धेत्यर्थ। "प्रसिद्धौ नाम चाव्यय" मिति हेममालिनी। यक्षेश्वरशब्देन यक्षश्रेष्ठ उच्यते यक्षशब्द उत्तरपदस्थ श्रेष्ठार्थोऽपीति वृद्धा। किंवा यक्षेश्वर कुबेर, गौरवे बहुवचनम्। बाह्योद्यानेत्यनेन अलकाचिह्नध्वनि। ननु यदि बाह्योद्यानस्थो हरस्तर्हि कथ "मत्वा देवं धनपतिसख यत्र साक्षाद्वसन्त" मिति वक्ष्यते, तत्र हि अलकान्तःस्थो हर प्रतीयते, कथ वा हर्म्यनैर्मल्यम्? उच्यते, अलकोद्यानस्थेऽप्यलकाया वसती-

वर श्रेष्ठ । यदि तु वर प्रशस्तमित्युच्यते तदा सामान्योपक्रमेण विशेषाभिधान यथा द्विगुरेकवचनमिति, एतच्च द्विगुसूत्रेऽनुन्यासे उक्तमिति टीकाकाराः । हेत्वलङ्कार॰ अर्थान्तरन्यासो वा ॥६ ॥

सन्तप्तानां त्वमसि शरणं तत् पयोद प्रियायाः
सन्देशं मे हर धनपतिक्रोधविश्लेषितस्य ।
गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां
बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या ॥ ७ ॥

मेघस्य प्रार्थ्यं प्रतिपादयन् याचनमाह—सन्त । हे पयोद मेघ, यतस्त्व सन्तप्ताना शरण रक्षितासि तत तस्मात् धनपते कुबेरस्य क्रोधेन कर्त्रा विश्लेषितस्य वियोजितस्य मे मम प्रियाया सन्देश हरिष्यसि प्रापयिष्यसि । तत्र सन्देश नीत्वा कुत्र गन्तव्यमित्याह । बाह्ये बहिर्भवे उद्याने आरामे निर्गमदेशे वा स्थितस्य हरस्य महादेवस्य शिरश्चन्द्रिकया ज्योत्स्नया धौतानि प्रक्षालितानि उज्ज्वलीकृतानि हर्म्याणि धवलगृहाणि यस्या तादृशी अलका नाम यक्षेश्वराणा यक्षश्रेष्ठाना वसतिर्निवासस्थान ते तत्र गन्तव्या गमनीया । सन्तप्ताना शरणमिति सामान्यप्रतीतत्वाद् विरहिसन्तापशान्तयेऽपि त्व प्रभु, तन्निवेदितावस्थस्य ममापि प्रियाया कृते सन्देशमवश्य हरिष्यसीति भाव । "शरण गृहरक्षित्रो" रित्यमरः । हरेत्याशासाया भविष्यति गी । हेतुसमोऽयमर्थान्तरन्यास,

यदाह,— "अन्यतो दृष्टसम्बन्धस्याभीष्टे विनियोगत ।
प्रसन्नप्रणयावेदि सता हेतुसम मतम् ॥" इति ।

पयोदेत्युचितपदन्यास जलस्य तापशान्तिहेतुत्वात्, सन्तापशरणाभ्युपगत्या पयोदपदेन महानुभावताध्वनि ।

यदुक्तं,— "दानमभ्युपपत्तिश्च सदा च प्रियभाषणम् ।
स्वे जने वा परे वापि तदौदार्यमुदीर्यते ॥" इति ।

धनपतिक्रोधविश्लेषितस्येत्यनेन परवशत्व तत्र गमनासामर्थ्यञ्च ध्वन्यते । प्रियाया इति सम्बन्धे षष्ठी, प्रियाया सकाशात् क्रोधविश्लेषितस्य इति योजयन्त्यन्ये । गन्तव्येति कर्मणि तव्य, ते इति कर्तरि षष्ठी । गन्तव्येत्यनेनाय शासनहारको दूत इति ज्ञापितम् । उक्तञ्च,—

"निसृष्टार्थो मितार्थश्च तथा शासनहारक ।
सामर्थ्यात् पादतो हीनो दूतस्तु त्रिविधो मत ॥" इति ।

अर्हार्थे तव्य, गन्तुमर्हति गन्तव्या, गमनार्हत्वेन तत्र त्रिवर्गफलवाप्तिर्व्यज्यते । तथाहि तत्र साक्षात् शिवदर्शनाद् धर्म, यक्षेश्वरसम्बन्धादर्थ । तथा च "इय यक्षेश्वरादृद्धा जनाना निधिदायिन" इति । काम सुलभो धौतहर्म्यत्वात् । तथाहि—

सुच्यते उपचारात्, हर्म्याण्युद्यानस्थान्येव । अथवा ऊर्ध्वप्रसारिप्रभाभिरभ्यन्तरस्थहर्म्यौधवैमल्यं वाच्यम् । यद्वा मूर्ध्यन्तरेणाभ्यन्तरेऽपि शिवो वसति । केचित्तु वाह्यं वाहनीयम् उद्यानम् उद्यतयानं महाप्रभः तत्रस्थो हरोऽलकायां विचरतीति व्याचक्षते । चन्द्रिकाशब्देन चन्द्रप्रभोच्यते, अत एव हरशिरश्चन्द्रिकेत्यत्र न कश्चिद्विरोधः । *शिरश्चन्द्रिकेत्यत्र चन्द्रस्य गम्यमानत्वात् न नेयत्वं दोषः, चन्द्रचन्द्रिकयोर्नित्यसम्बन्धात् व्याप्तिसिद्धत्वादित्यन्येऽपि* । आरोपलक्षणया शिरःशब्देन शिरःस्थश्चन्द्रोऽभिधीयते मञ्चाः क्रोशन्तीत्यादिवदिति **केचित्** । हरस्य शिरसि चन्द्रो हरशिरश्चन्द्रस्तस्य प्रभा हरशिरश्चन्द्रिकेति **केचित्** । "आरामे निर्गमे च स्यादुद्यानञ्च प्रयोजने" इति **रन्तिदेवः** । हेतुजातिभ्यां सङ्कीर्णमलङ्कारः । तथा च 'नानालङ्कारसंसृष्टिः सङ्कीर्णन्तु निगद्यते' इति ॥ ७ ॥

**त्वामारूढं पवनपदवीमुद्गृहीतालकान्ताः**
**प्रेक्षिष्यन्ते पथिकवनिताः प्रत्ययादाश्वसत्यः ।**
**कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायां**
**न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः ॥ ८ ॥**

कामसम्पत्त्या मेघं प्रोत्साहयन् अस्य विरहिणीजनोपकारित्वध्वनिना वार्ताहरणस्यावश्यकर्तव्यतामाह—त्वा । प्रत्ययात् वर्षोपक्रमे पान्था नियतमायान्तीति निश्चयज्ञानात् आश्वसत्यो मनःस्वास्थ्यमातन्वत्यः पथिकवनिताः प्रोषितभर्तृकाः उद्गृहीता ऊर्ध्वं क्षिप्ता अलकानां चूर्णकुन्तलानाम् अन्ताः प्रान्तभागा याभिस्तादृश्यः सत्यः पवनपदवीं वायुपथम् आकाशम् आरूढम् आश्रितं त्वां प्रेक्षिष्यन्ते प्रकर्षेण द्रक्ष्यन्ति । प्रत्ययस्य सकललोकानुभूयमानहेतुमाह कः पुरुषः त्वयि सन्नद्धे सज्जीभूते उदिते वा उपस्थिते वा सति विरहेण वियोगेन विधुरां विकलां जायां भार्याम् उपेक्षेत त्यजेत् न कोऽपीत्यर्थः । ननु त्वमेव कथमुपेक्षसे इत्याह न स्यादिति, अपि सम्भावनायां, योऽन्य इतरो जनः अहमिव यथाहं तथा पराधीनवृत्तिः परवशचेष्टो न स्यात् न भवेत् स क उपेक्षेतेत्यन्वयः । इच्छयाऽहं जाया नोपेक्षितवान् किन्तु यक्षेश्वरवशत्वादिति भावः । **अन्ये तु** । योऽन्योऽपि जनो न भवतु योऽहमिव परायत्तजीवनः । न स्यादिति प्रार्थनायां लिङ्, स्वतन्त्रो भवत्विति भावः । यद्वा सोऽन्योऽपि न सम्भाव्यते योऽहमिव पराधीनवृत्तिः स्यादिति सम्भावनायां लिङ् । अत्र यच्छब्द उत्तरवाक्यार्थः *पूर्ववाक्यानुगतस्य तच्छब्दस्योपादानं नापेक्षते इत्याहुः । आरूढमिति कर्तरि क्तः उद्गृहीतालकान्ता इत्यनेन* विरहे वर्णनायोगाद् दैन्यं सूचितम् । उक्तञ्च,

"मलिनं वसनं ध्यानमेकवेणीधरं शिरः ।
अङ्गरागपरित्यागो नाल्यानाश वर्णनम् ॥" इति ।

प्रवृत्तसम्भोगानां स्त्रीणां सविलासकार्यतया - नागो सुरवासुन्दरीदर्शनयोग्यत्वेन सम्यक्सम्भावितिध्वनिना । यदुक्तं— "किमपरदलनेत्रेलोकसंस्थानवाङ्कजम् ।
अन्यः पश्यति सिद्धश्री समागमसुखप्रदम् ॥" इति ।

केचित्तु प्रत्ययात् शपथात् आत्मनः अधिकं दुर्गं सुवन्त्यः, यात्रासमये मेघागमेऽवश्यं समेष्याम इति भर्तॄणां पुरः शपथं कृत्वा पान्थास्तु प्रस्थिताः अधुना मेघः समागतस्ते तु नागता इति शपथलोपनम् । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः इत्याहुः । सन्नद्ध इत्यनेन विकासित्वं कान्तत्वादि ध्वन्यते । 'वियोगे च विधुरं विधुरो विकले' इति यादवः ॥ ८ ॥

मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां
वामश्चायं नदति मधुरं चातकस्ते सगर्वः ।
गर्भाधानक्षमपरिचयं नूनमाबद्धमालाः
सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः ॥ ६ ॥

यात्रानुकूल्यवातादिकेन बलाकानायिकासेवासञ्जातधर्मसम्पत्त्या च मेघं प्रोत्साहयन्नाह । मन्दं । अनुकूलः पश्चाद्वर्ती पवनो वायुर्यथा यतस्त्वां मन्दं [ मन्द ] शनैः शनैर्नुदति प्रेरयति एव यथायं वामो वामदेशस्थः स [ गर्वः ] गर्भस्थजलसम्वर्धनीयत्वात् सदर्पो हृष्टः सन् चातकः स्वनामख्यातः पक्षी ते तुभ्यं मधुरं मनोहरं यथा स्यात् तथा नदति शब्दायते, तस्मात् नूनं शङ्के आबद्धमालाः कृतपङ्क्तयो बलाका पक्षयः खे आकाशे गर्भस्याऽऽधाने आरोपणे क्षमः समर्थः परिचयोऽनुभावो यस्य तादृशं नयनसुभगं लोचनाह्लादकं भवन्तं त्वां सेविष्यन्ते आश्रयिष्यन्ते । यतो यात्रायाम् एतादृशशुभसूचकवातानुकूल्यादिकं तत् तव धर्मप्रसादतो मम कार्यसिद्धिरपि भविष्यतीत्यर्थः । मन्द मन्दमिति वीप्सायामधिके वा द्वित्वं प्रकारगुणवचनस्य द्वित्वे कर्मधारयवत्त्वातिदेशात् मन्दमन्दमिति हि स्यात् ।

मन्ये शंके ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥" इति ।

हेतुरित्यन्ये । नेशेन (?) केचिदेवमाहुः वरमाकायन्ति आकर्यन्ति वलाकाः स्त्रियः खे इन्द्रिये वर्तमानं भवन्तं सेविष्यन्ते रतचेष्टया अनुकूलयिष्यन्ति । अत्र माला पुष्पादिस्रक्, परिचयः सम्भोगः, पवनो नासागतवायुः । उक्तञ्च निषेकाध्याये

"ऋतुप्रवृत्ता सुतलोभकांक्षिणी गतेऽनिले दक्षिणनासिकापुटे ।
प्रसेवनीया सततं स्वामिनो नरेण षष्ठ्यादिषु युग्मरात्रिषु ॥" इति ।

'खद्धामे हि वन्ध्यता जायते' इति च । चातकशब्दः शारिकाद्युपलक्षणः । वामः प्रशस्तः । नयनसुभगं सभ्रूविकारमिति प्रियत्वमुक्तम् ।

पत्नी स्या''दिति नामशासनम्, आशैव बन्धो बन्धनम् आशाबन्धः। अन्यदपि चलं वस्तु बन्धेन रुध्यते इति ध्वनिः। ''लूतातन्तुप्रताने स्यादाशाबन्धो मनोरथे'' इति धरः।

''आशाबन्धः समाश्वासे तथा मर्कटसूत्रके'' इति विश्वः ॥१०॥

कर्तुं यच्च प्रभवति महीमुच्छिलीन्ध्रातपत्रां
तच्छ्रुत्वा ते श्रवणसुभगं गर्जितं मानसोत्काः।
आ कैलासाद्बिसकिसलयच्छेदपाथेयवन्तः
सम्पत्स्यन्ते नभसि भवतो राजहंसाः सहायाः ॥ ११ ॥

आपृच्छस्व प्रियसखममुं तुङ्गमालिंग्य शैलं
वन्द्यैः पुंसां रघुपतिपदैरङ्कितं मेखलासु ।
काले काले भवति भवतो यस्य संयोगमेत्य
स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो बाष्पमुष्णम् ॥ १२ ॥

प्रार्थनायामनुत्तरमनुमतिचिह्नमिति मेघस्यानुमतं बुद्ध्वा इतिकर्तव्यतामाह । आपृ । अमुं सन्निहितं शैलं रामगिरिम् आलिंग्य आश्लिष्य त्वम् आपृच्छस्व प्रियवचनेन आमन्त्रय सन्तोषय । एतेन बन्धुजनमामन्त्र्य यत्र तत्र गन्तव्यमिति लोकाचारो ध्वनितः । कीदृशं ? प्रियसखं प्रियसुहृदम् एतेन कितवो हि वासप्रीत्या सख्यं जनयतीति निरस्य निसर्गप्रीतिः सूचिता । तथा तुङ्गम् उच्चैस्तरं महानुभावञ्च । उच्चैस्त्वमहत्त्वे सख्ये च हेतुमाह, पुंसां पुरुषाणां वन्द्यैर्नमस्कार्यैः रघुपते रामस्य पदैः पादमुद्राभिर्मेखलासु कटकप्रदेशेषु अङ्कितं चिह्नितम्; रामोऽपि अस्य शृङ्गं गन्तुमशक्त इत्युच्चैस्त्वम्, पुंसां वन्द्यैरित्यनेन निखिलकलुषापहारित्वान्महानुभावता; रामगिरिरयं रामरूपस्य विष्णोश्चरणसङ्गी मेघोऽपि वियति विष्णुपदे नित्याधिवास इति सादृश्यात् सख्यम् । यदुक्तं—"कैलिश्च सङ्गतिश्चैव विवादश्च धनाधिप । सदृशैरेव दृश्यन्ते नाधमैर्नापि चोत्तमै" रिति, ॥ "सदृशैः शोभते मैत्र" मिति च । नहि सादृश्यमात्रे सख्यं भवतीति, सख्यं व्यक्तीकर्तुमाह काल इति । काले काले प्रतिवर्षं भवतस्तव संयोगं सम्पर्कम् एत्य प्राप्य चिरविरहजं प्रभूतकालविच्छेदजनितम् उष्णं तप्तं बाष्पम् ऊष्माणं मुञ्चतस्त्यजतो निःसारयतो यस्य अस्य शैलस्य स्नेहव्यक्तिर्दृष्टिसंजातमनोहराकारत्वं भवति; अन्यः सखापि बाष्पं नयनजलं मुञ्चति-तस्य स्नेहव्यक्तिः प्रेमाभिव्यक्तता भवति । आपृच्छस्वेति "द्विभ-राजो" त्यादिना आत्मनेपदम् । सुखमास्तां भवान् अहं गत्वा आगच्छामीत्यात्मनिर्मोचनार्थं सुहृत्सम्भाषणमाप्रश्न इति वृद्धाः । प्रियश्चासौ सखा चेति "सख्यहोराज्ञ" इति षः । आलिंग्येति, ननु यात्रायामालिङ्गनं लोकविरुद्धं तर्हि कथमालिङ्ग्येत्युक्तं ? उच्यते, गमनप्रारम्भ एव विरुद्ध, इह तु वर्त्मवार्ताश्रवणाद्विलम्बापेक्षा, किंवा आलिङ्ग्यश्चासौ शैलश्चेति कर्मधारयः; "तेन्या" इति अर्हार्थे ष्यन् । केचित्तु तुङ्गं गाढं यथा स्यात् तथालिंग्येति व्याचख्युः । रघुपतिपदैरिति बहुत्वेनानेकपादन्यासस्य सूचनादनेकस्थानस्य पावनत्वख्यापनादस्य महत्त्वं पूजनीयत्वञ्च सूचितम् ।

मार्गं तावच्छृणु कथयतस्त्वत्प्रयाणानुरूपं
सन्देशं मे तदनु जलद श्रोष्यसि श्रोत्रपेयम् ।
खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र
क्षीणः क्षीणः परिलघु पयः स्रोतसाञ्चोपयुज्य ॥ १३ ॥

अथ केन पथा गन्तव्यं कः स्थानत्वं किंवा पाथेयमित्याशङ्क्य सामान्येनोत्तरमाह । मार्गं । हे जलद मेघ कथयतो वदतो मत्तः सकाशात् त्वत्प्रयाणानुरूपं सम्भवयोगक्षेमत्वेन भवद्गमनयोग्यं मार्गं पन्थानं तावत् शृणु आकर्णय, तदनु पश्चात् मार्गश्रवणानन्तरं श्रोत्रपेयं श्रोत्राभ्यां पेयं सादरमाकर्णनीयं मे मम सन्देशं श्रोष्यसि । प्रयाणानुरूपतां व्यक्तीकर्तुमाह खिन्न इति । यत्र मार्गे खिन्नः खिन्नः सन् अध्वश्रमेण श्रान्तः श्रान्तः सन् शिखरिषु पदं पादन्यासं स्थितिं वा न्यस्य कृत्वा, एवं क्षीणः क्षीणः सन् वर्षणेन कृशः कृशः सन् तृषितस्तृषितः सन् परि सर्वतोभावेन लघु अगुरु स्रोतसां नदीप्रवाहादीनां पयो जलं च उपयुज्य गृहीत्वा पीत्वा त्वं गन्तासि गमिष्यसि । मार्गनिरूप

यात्रामुपदिशन् कामसम्पत्त्या प्रोत्साहयिनुमाह । अद्रे । त्वमुदङ्मुख सन् अलकाया उत्तरास्थानात् उत्तराभिमुख सन् अस्मात् सरसनिचुलात् प्रत्यग्रहिज्जलपुष्पात् स्थानात् स्थितिदेशात् खम् आकाशम् उत्पत उद्गच्छ । अस्याकाशगतित्वात् निचुलादिव्यासत्वेन स्थलगमनारम्भनाच खमित्युक्तम् । नभोगमने काम सम्पत्त्या प्रोत्साहमाह, त्व कीदृश ? मुग्धाभि सिद्धानामङ्गनाभिश्चकितचकित भीत भीत सततविस्मय यथा स्यात्तथा दृष्ट उन्छाय उन्नतिर्ग्रस्य तादृश । ताभि कथमदमूर्ध्ववर्ती दृश्य इत्याद, ताभि कीदृशीभि ? स्विद्रि तर्के, किं पवनो वायु अद्रे पर्वतस्य शृङ्ग शिखर हरतीति शृङ्गपातभयात उन्मुखीभिरूर्ध्ववदनाभि । पुन कीदृशश्च, पथि नभसि दिङ्नागाना दिग्गजाना स्थूलहस्तावलेपान् करप्रहारान् परिहरन् वर्जयन् । ननु अद्रे शृङ्ग हरति पवन इत्यनेन कथ वितर्क सम्पद्यते, यतो वितर्क उभयकोट्यवलम्बी भवति यथा स्थाणुर्वा पुरुषो वेति तत् कथमत्र सशय ? उच्यते, किमिद शृङ्गमुत मेघ इति गम्य बुद्धिसिद्धकोट्य न्तरम् अथवा मौग्ध्यादककोट्य वलम्ब्यपि सशय । तथा च मौग्ध्यमुदाहृत भवति,

"सत्यमेवान्यदेशेऽपि विद्यते शशलाञ्छन ।
ते वृक्षा कीदृशा नाम येषा मुक्ताफल फलम ॥' इति ।

उन्मुखीभिरित्यनेन भयोन्मुखत्वात् प्रततावलोकन सूचितम्, तेन चानुरागिकामुकेङ्गितध्वनि । उक्तञ्च

"अकालमर्पयेद्भार प्रतताञ्च निरीक्षते ।
क्षणात् साधून्मुखी सा स्याद्दृष्ट्वा चाधामुखी भवत्' ॥ इति ।

दृष्टेति "धातुसम्बन्धे प्रत्यया' इति भविष्यति क्त । द्रक्ष्यमाणान्छाय इत्यर्थ ॥

मुग्धेति मौग्ध्यशालिनी मुग्धा, मौग्ध्य यथा ?

मुक्ताफल तरो कस्येत्यादि वा कृत्रिम वच ।
वल्भानां परस्त्रीणा मौग्ध्यमेव विदुर्बुधा ॥" इति ।

मभिमतम्, तस्मादवश्यं परिहरणीयमिति ध्वनितमित्यन्ये, परिहरन् परिहरिष्यन् गमिष्यसीत्यर्थः। गजाश्च प्रायः मेघे करघात कुर्वन्ति, यदुक्तं गजशास्त्रे—

"अवस्थां पञ्चमीं प्राप्ता दृष्ट्वा कृष्णाम्बुदं गजाः ।
सन्तापशान्तये तासां क्षिपन्ति स्थूलहस्तकान् ॥" इति ।

ननु वर्त्मनि विघ्नसम्भावनेयमयुक्ता मेघस्यानुत्सङ्गप्रसङ्गात् ? उच्यते, एतत्कथनेन अन्तरायान्तरनिवृत्तिः सूचिता, अयमन्वेषः प्रत्यवाय शक्यपरिहारोऽस्त्यूर्ध्वगमनात्। अत एवोत्पतेति उद्ग्रहणम्। सशयोपमेयम्, तथा च दण्डी ।

"किं पद्ममन्तर्भ्रान्तालि किन्ते लोलेक्षण मुखम् ।
मम दोलायते चित्तमितीयं संशयोपमे" ति [ का० २।२६ ] ॥ १४ ॥

**रत्नच्छायाव्यतिकर इव प्रेक्ष्यमेतत्पुरस्ताद्**
**वल्मीकाग्रात् प्रभवति धनुःखण्डमाखण्डलस्य ।**
**येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते**
**बर्हेणेव स्फुरितरुचिना गोपवेशस्य विष्णोः ॥ १५ ॥**

यात्रायां मङ्गलं कथयन् गच्छतस्तव शोभा भाविनीति दर्शयन् कथमनलङ्कृतो राजराजधानीं यास्यसीति परिहरति, रत्न। आखण्डलस्य शक्रस्य एतद् धनुःखण्डं पुरस्तात् पूर्वस्यां दिशि वल्मीकाग्रात् उपचिकाकृतमृत्स्तूपाग्रात् प्रभवति प्रकटीभवति। कीदृशम्, रत्नानामिन्द्रनीलपद्मरागादीनां नानावर्णानां छायाव्यतिकर इव प्रभासम्पर्क इव प्रेक्ष्यं दर्शनीयं सौन्दर्याद् यान्तिकं ताच, दर्शनयोग्यं वा, अहार्यं ध्वन्, येन स्फुरितरुचिना सञ्चलितदीप्तिना धनुःखण्डेन ते तव श्यामं नीलं वपुः शरीरम् अतितराम् अत्यर्थं कान्तिं दीप्तिम् आपत्स्यते प्राप्स्यति, यथा स्फुरितरुचिना बर्हेण मयूरपुच्छेन गोपवेशस्य गोकुले गोपालवेषधारिणो विष्णोः कृष्णस्य श्यामं वपुरतितरां कान्तिम् आपत्स्यते। रत्नच्छायाव्यतिकर इवेति शक्रधनुषो नानावर्णत्वादुक्तम्, बर्हमपि रत्नच्छायाव्यतिकर इव प्रेक्ष्यम्। "भवेद्व्यतिकरोऽन्योन्यसम्पर्के व्यसने तथे" ति रन्तिः। एतदिति प्रत्यक्षप्रतिपादनात् पर्येत्यासन्नलभ्यम्, पुरस्तादित्यनेन कार्यसिद्धिः सूचिता, यदेतादृशं शक्रधनुः शुभदमिति, यदाह वराहः।

"धनुर्दक्षिणतो भूतं सद्दिवि निरन्तरम् ।
यात्रानुकूल्यं सदा धनुरैन्द्रं शुभावहम् ॥" इति ।

पूर्वदिग्वर्ति च धनुरुत्तराभिमुखस्यास्य मेघस्य दक्षिण एव भवति। पुरस्तादग्रत इति केचित्, तत्र सा, यतो गच्छतोऽग्रे शक्रधनुरनिष्टं, तथा च "अग्रतः शक्रचापं तु न शोभनफलप्रद"मिति। प्रेक्ष्यमित्यनेनैव मङ्गलस्य धनुषो दर्शनं ध्वनितम्। धनुःप्रभाकरनेन पथि धनुर्धरो यास्यसीति ध्वनितमिति केचित्। वल्मीकाग्रादिति "धनुःकिरणभङ्गिवातुर्विदिक्षु भुजङ्गश्रेणिरिव नभसि घनेषु शक्रधनुराकारमारचयते" इत्यागमः। मतान्तरे वल्मीकाग्रात् पर्वताग्रादिति च व्याचक्षते। सूर्यकरा हि वर्तुलिता धनूरूपा इन्द्रधनुरुच्यते। तथा च ज्योतिषे 'सूर्यस्य विविधवर्णाः पवनेन विघट्टिताः कराः साभ्रे। वियति धनुःसंस्थाना ये दृश्यन्ते तदिन्द्रधनु' रिति ॥ "वल्मीके गिरे: शृङ्गे मनाकारः प्रदृश्यते" इति सरस्वतीः। "वल्मीकः शतगो मेघ" इति कश्चिदभिधान-

यात्रामुपदिशन् कामसम्पत्त्या प्रोत्साहयन्नाह । अद्रेः । त्वमुदङ्मुखः सन् अलकाया उत्तरावस्थानात् उत्तराभिमुखः सन् अस्मात् सरसानिचुलात् प्रत्यग्रहिज्जलपुष्पात् स्थानात् स्थितिदेशात् खम् आकाशम् उत्पत उद्गच्छ । अस्याकाशगतित्वात् निचुलादिव्याप्तत्वेन स्थलगमनासम्भवाच्च खमित्युक्तम् । नभोगमने कामसम्पत्त्या प्रोत्साहमाह; त्वं कीदृशः ? मुग्धाभिः सिद्धानामङ्गनाभिश्चकितचकितं भीतं भीतं सततविस्मयं यथा-स्यात्तथा दृष्ट उच्छ्राय उन्नतिर्यस्य तादृशः । ताभिः कथमहमूर्ध्ववर्ती द्रष्टव्य इत्याह, ताभिः कीदृशीभिः ? किंस्विद्वि-तर्के, किं पवनो वायुः अद्रेः पर्वतस्य शृङ्गं शिखरं हरतीति शृङ्गपातभयात् उन्मुखीभिरूर्ध्ववदनाभिः । पुनः कीदृशस्त्वं, पथि वर्त्मनि दिङ्नागानां दिग्गजानां स्थूलहस्तावलेपान् करप्रहारान् परिहरन् वर्जयन् । ननु अद्रेः शृङ्गं हरति पवनः इत्यनेन कथं वितर्कः सम्पद्यते, यतो वितर्क उभयकोट्यवलम्बी भवति, यथा स्थाणुर्वा पुरुषो वेति; तत् कथमय संशयः ? उच्यते, किमिदं शृङ्गमुत मेघ इति गम्यं बुद्धिसिद्धकोट्यन्तरम्; अथवा मौग्ध्यादेककोट्य-वलम्ब्यपि संशयः । तथा च मौग्ध्यमुदाहृतं भवति,

"सत्यमेवान्यदेशेऽपि विद्यते शशलाञ्छनः ।
ते वृक्षाः कीदृशा नाम येषां मुक्ताफलं फलम् ॥" इति ।

उन्मुखीभिरित्यनेन भयोन्मुखत्वात् प्रननावलोकन सूचितम्, तेन चानुरागिणामुत्कण्ठितध्वनिः । उक्तम्,

"अकाल्मर्पयेद्भारं प्रततं निरीक्षते ।
क्षणात् साधून्मुखी सा स्याद्दृष्ट्वा चाधोमुखी भवेत्" ॥ इति ।

दृष्टेति "धातुसम्बन्धे प्रत्ययाः" इति भविष्यति क्तः । द्रक्ष्यमाणोच्छ्राय इत्यर्थः ॥

मुग्धेति मौग्ध्यशालिनी मुग्धा; मौग्ध्यं यथा ?

मभिमतम्, तस्मादवश्यं परिहरणीयमिति ध्वनितमित्यन्ये, परिहरन् परिहरिष्यन् गमिष्यसीत्यर्थः। गजाश्च प्रसन्ना मेघे करपात कुर्वन्ति ; यदुक्तं गजशास्त्रे—

"अवस्थां पञ्चमीं प्राप्ता दृष्ट्वा कृष्णाम्बुदं गजाः।
सन्तापशान्तये तस्मात् क्षिपन्ति स्थूलहस्तकान्॥" इति।

ननु वर्त्मनि विघ्नसम्भावनेयमयुक्ता मेघस्यानुत्साहप्रसङ्गात्? उच्यते, एतत्कथनेन अन्तरायान्तरनिवृत्तिः सूचिता, अथवानेकः प्रत्यवायः शक्यपरिहारोऽप्यपूर्वगमनात्। अत एवोत्पतेति उद्ग्रहणम्। संशयोपमेयम्, तथा च दण्डी।

"किं पद्ममन्तर्भ्रान्तालि किन्ते लोलेक्षणं मुखम्।"
मम दोलायते चित्तमितीयं संशयोपमे" ति [ का० २।२६ ]॥ १४॥

रत्नच्छायाव्यतिकर इव प्रेक्ष्यमेतत्पुरस्ताद्
वल्मीकाग्रात् प्रभवति धनुःखण्डमाखण्डलस्य।
येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते
बर्हेणेव स्फुरितरुचिना गोपवेशस्य विष्णोः॥ १५॥

यात्रायां मङ्गलं कथयन् गच्छतस्तव शोभा भाविनीति दर्शयन् कथमनलंकृतो राजराजधानीं यास्यामीति परिहरति, रत्न। आखण्डलस्य शक्रस्य एतद् धनुःखण्ड पुरस्तात् पूर्वस्यां दिशि वल्मीकाग्रात् कृमिकाकृतमृत्स्तूपाग्रात् प्रभवति प्रकटीभवति। कीदृशम्, रत्नानामिन्द्रनीलपद्मरागादीनां नानावर्णानां छायाव्यतिकर इव प्रभासम्पर्क इव प्रेक्ष्यं दर्शनीयं सौन्दर्याद् यान्त्रिकत्वाच्च, दर्शनयोग्यं वा, अर्हार्थे ण्यत्, येन स्फुरितरुचिना सवलितदीप्तिना धनुःखण्डेन ते तव श्यामं नीलं वपुः शरीरम् अतितराम् अत्यर्थं कान्तिं दीप्तिम् आपत्स्यते प्राप्स्यति, यथा स्फुरितरुचिना बर्हेण मयूरपुच्छेन गोपवेशस्य गोकुले गोपालवेशधारिणो विष्णोः कृष्णस्य श्यामं वपुरतितरां कान्तिम् आपत्स्यते। रत्नच्छायाव्यतिकर इवेति शक्रधनुषो नानावर्णत्वादुक्तम् ; बर्हमपि रत्नच्छायाव्यतिकर इव प्रेक्ष्यम्। "भवेद्व्यतिकरोऽन्योन्यसम्पर्के व्यसने तथे" ति रन्तिः। एतदिति प्रत्यक्षप्रतिपादनम् परोक्षत्वाद्वेलक्ष्यम्, पुरस्तादित्यनेन कार्यसिद्धिः सूचिता, यदेतादृशं शक्रधनु शुभमपि, यदाह वराहः।

यात्रादक्षिणतो भूतं तद्वद्दिवि निरन्तरम्।
यात्रानुकूल्यं सदा धनुरैन्द्रं शुभावहम्॥" इति।

पूर्वदिग्गते च धनुरुदङ्मुखयात्रस्य मेघस्य दक्षिण एव भवति। पुरस्तादग्रत इति केचित्, तन्न सत् ; यतो गच्छतोऽग्रे शक्रधनुषस्त्रिकालतया च "अग्रतः शक्रचापस्तु न शोभनफलप्रद"मिति। प्रेक्ष्यमित्यनेनैव मङ्गलस्य धनुषो दर्शनं ध्वनितम्। धनुष्पात्रकालेन पथि धनुरेव यस्यापीति ध्वनितमिति केचित्। वल्मीकाग्रादिति "वसुकिकुलमणिनागपुलिङ्गैः कल्पविरचितृमृत्स्नमसि समीपे शक्रधनुरुदयनमारभते" इत्यागमः। मतान्तरे वल्मीकाग्रात् पर्वताग्रादिति च व्याचक्षते। सूर्यकरा हि वक्रभिता धनुरूपा इन्द्रधनुरुच्यते। तथाच ज्योतिषे 'सूर्यस्य विविधवर्णाः पवनेन विघट्टिताः कराः साभ्रे। वियति धनुःसंस्थाना ये दृश्यन्ते इन्द्रधनुस्तत् तदे'ति॥ "वमलूरे गिरेः शृङ्गे वल्मीकादमिन्वते" इति संसारवर्तः। "वल्मीकः सलाली मेघ" इति कश्चिदभिधत्ते

पठति। वल्मीकः सूर्य इति केचित्। धनुःखण्डमिति धनुरेव धनुःखण्डं शाटीखण्डादिवत् स्वार्थे खण्डशब्दः, "स्वरूपे शकले खण्ड"मिति बलः। येन श्याममित्यादिना स्पर्शनमपि ध्वनितम्, यदुक्तम्,—

"दर्शनं स्पर्शनं शस्तं मङ्गलानां श्रुतिस्तथा।
रत्नानां कीर्तनं शस्तं तथा विष्णोश्च कीर्तनम् ॥" इति।

अतितरां कान्तिमापत्स्यते इत्यनेनालङ्कारश्च तदेवेति ध्वनितम्। अतिकान्तिः दीप्तिः, तथाच—

"शोभैव कुसुमास्त्रेण पूरिता कान्तिरुच्यते। कान्तिमेवातिविस्तीर्णां दीप्तिमिच्छन्ति सूरय" इति।

आपत्स्यत इति आङ्पूर्वपदो रूपम्। आलप्स्यते इति क्वचित् पाठः। विष्णोरिति विष्णुतुल्यतया गतौ प्रोत्साहः सूचितः, तत्स्मृत्या परममङ्गलञ्च। तथाच, "हरिस्मृतिः सर्वविपद्विनाशिनी"ति ; "सैव यात्रा शुभा प्रोक्ता यत्र प्राक् स्मर्यते हरि" रिति-च। विष्णुदेव सर्वव्यापकत्वं गोपवेशधरेणानेन इन्द्रजिप्रकृत्वञ्च प्रतिपादितम्, तद्वद्यं यथा तस्य तथा तवापीति ध्वनिः ॥ १५ ॥

त्वय्यायत्तं कृषिफलमिति भ्रूविकारानभिज्ञैः
प्रीतिस्निग्धैर्जनपदवधूलोचनैः पीयमानः।
सद्यः सीरोत्कषणसुरभि क्षेत्रमारुह्य मालं
किञ्चित्पश्चाद् व्रज लघुगतिर्भूय एवोत्तरेण ॥ १६ ॥

मालदेशावधि उत्तराभिमुखं गत्वा पश्चात्प्रतीच्यदिशा गमिष्यसीति ज्ञापयन् दर्शनकामसम्पत्त्या प्रोत्साहयन्नाह। त्वयीति। कृषिफलं त्वयि सति त्वद्विषये वा आयत्तम् अधीनम् इति हेतोः प्रीत्या अनुरागेण स्निग्धैर्मनोहरैः भ्रूविकारानभिज्ञैः कटाक्षक्षेपादिशून्यैर्जनपदवधूनां ग्राम्यस्त्रीणां लोचनैर्नयनैः पीयमानः सादरं दृश्यमानः सन् त्वं सद्यस्तत्क्षणं सीरेण हलेन यदुत्कर्षणं तेन सुरभि सुगन्धि मालं मालनामदेशसम्बन्धि क्षेत्रं केदारं पर्वतसीमानं वा आरुह्य आक्रम्य लघुगतिः शीघ्रगतिः सन् किञ्चित्पश्चात् पश्चिमेन किञ्चिदुत्तरेण व्रज गमिष्यसि। आशंसायां भविष्यति लोट्। त्वय्यायत्तमिति त्वदधीनमेव; उक्तञ्च ज्योतिषे,"अन्नं जगतः प्राणाः प्रावृट्कालस्य चान्नमायत्तम्" इति, मनुनाप्युक्तम्, "आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति। एतेन कृषिभिर्जगदुपकरोषीति स्वकार्यप्रोत्साहनं ध्वनितम्। भ्रूविकारेति भ्रूविभ्रमाविज्ञत्व मालस्त्रीत्वात्, स्वल्पाख्यानमिदम्। ननु लोचनानामनभिज्ञत्वं न सम्भवति अभिज्ञानानभिज्ञानयोश्चेतनाधर्मत्वात् ? उच्यते, स्त्रीणामेवानभिज्ञत्वं लोचनेषूपचरितमित्यदोषः। ननु नैतादृशदर्शनं प्रीतिहेतु, न च वाच्यं, प्रीतिस्निग्धैरित्युक्तत्वात्, तानि हि निजप्रेमस्नेहानि अतः प्रीतिकारणान्येव, तथाच—"विभ्रमा नागरस्त्रीणां न तथा रमयन्ति नः।

आसारेण त्वमपि शमयेस्तस्य नैदाघमग्निं
सद्भावार्द्रः फलति न चिरेणोपकारो महत्सु ॥१७॥

खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासीति यदुक्तं तत् प्रपञ्चयन्नाह । अध्व । हे जलद मेघ, चित्रकूटः सानुमान् चित्रकूटनामा पर्वतः अध्वनि पथि क्लान्तं खिन्नं वर्त्मायासक्लेशितं प्रतिमुखगतम् अभिमुखप्राप्तं त्वां श्लाघमानः सन्तापशान्तिहेतुत्वात् "आगच्छ विश्वोपकारक क्षेम ते" इत्यादि वाग्भिस्तुवन् तुङ्गेन शिरसा मूर्ध्ना शृङ्गेण त्वां वक्ष्यति धारयिष्यति । प्रत्यासत्त्यादेरस्य मेघस्येतिकर्तव्यतामाह, त्वमपि आसारेण धारावर्षेण तस्य चित्रकूटस्य नैदाघं ग्रीष्मसमयसम्भवमग्निं दावानलं शमयेः शान्तिं प्रापयिष्यसि, इममेव प्रत्युपकारं द्रढयितुमर्थान्तरं न्यस्यति, सन् प्रशस्तो यो भावोऽन्तर्निगूढेच्छा तेनार्द्रः स्निग्धो महत्सु महात्मसु उपकार उपकृतिश्चिरेण विलम्बेन न फलति अपि तु सद्य एव फलति प्रत्युपकारं निष्पादयतीत्यर्थः । अध्वक्लान्तमित्यनेन आपन्नो न त्याज्य इत्याकूतम् । प्रतिमुखगतमिति अवर्त्मस्थितस्योपगमे विलम्बः स्यादित्युक्तम् । सानुमच्छब्दः पर्वतपर्यायः, "सानुमान्निर्झरी गिरि" रिति पुरुषोत्तमः, किंवा सानुमान् प्रशस्तबहुसानुयुक्तः,प्रशंसायां भूम्नि च मतुः । एतेन विश्रामयोग्यत्वमुक्तम् । तुङ्गशब्दो मानोन्नतमप्याह, तेन तुङ्गेन मानोन्नतेनापि शिरसा मस्तकेन त्वां वक्ष्यतीत्यनेन मेघोत्कर्षो लोकोक्त्या आदरातिशयश्च ज्ञापितः । त्वामित्यस्य श्लाघमान इत्यनेन वक्ष्यतीत्यनेन च सम्बन्धः, किं वा त्वदागमनेन धन्योऽहं सुप्रातं जीवितोऽस्मीत्यात्मनः श्लाघां कुर्वाणः । "धारासम्पात आसार" इत्यमरः । सद्भावार्द्र इति त्वमित्यस्य विशेषणं, सद्भावो विशुद्धाशयता किंवा विद्यमानभावः सजलता तेन चार्द्रः सस्नेहः स्तिमितो वा, एतेनागन्तुना प्राक्तनादरेण शक्त्यनुरूपप्रत्युपकारो विधेयः इत्युक्तम् । "स्निग्धस्तिमितयोरार्द्रः कोमलनिष्ठुरात्मनो"रिति धरणिः । नचिरेणेति समस्तं वा, समासेनञोऽनो निभासितत्वात्,अचिरेण शीघ्रमित्यर्थः ॥१७॥

त्वामासारप्रशमितवनोपप्लवं साधुमूर्ध्ना
वक्ष्यत्यध्वश्रमपरिगतं सानुमानाम्रकूटः ।
न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय
प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः ॥ १८ ॥

चित्रकूटे मुहूर्तं विश्रम्य तत्समीपवर्तिन्याम्रकूटे शैले श्रममपनेष्यसीत्यभिप्रायेणाह । त्वा । आसारेण महावृष्ट्या प्रशमितः प्रकर्षेण शान्तिं नीतो वनस्य काननस्य उपप्लव उपसर्गो दावाग्निसम्भवो येन तादृशम्, अध्वश्रमेण वर्त्मायासेन परिगतं सङ्गतम् आक्रान्तं त्वाम् आम्रकूटः सानुमान् आम्रकूटनामा पर्वतः साधुमूर्ध्ना प्रशस्तशिरसा साधु यथा स्यात्तथा मूर्ध्ना वा वक्ष्यति धारयिष्यति । एतदेव द्रढयितुं दृष्टान्तसंकीर्णमर्थान्तरन्यासमाह—क्षुद्रोऽपि अल्पोऽपि अधमोऽपि प्रथमसुकृतापेक्षया पूर्वकृतोपकारोपरोधेन हेतुना संश्रयाय स्थिताय मित्रे सुहृदि प्राप्ते उपगते सति विमुखः पराङ्मुखो न भवति यस्तु तथा प्रसिद्धस्वरूपेण उच्चैः श्रेष्ठो महानुभावश्च स विमुखो न भवतीति किं वाच्यं, न वाच्यमेव, य उच्चैः स तथा अनिर्वचनीयरूपेण विमुखो न भवतीति किमिति वा योज्यम् । आसारेति हेतुगर्भविशेषणम्, यत एवम् अतो वक्ष्यति । "आसारो महती वृष्टि"रिति यादवः । अध्वेति अध्वश्रमेण हेतुना परिगतम् आगतम् अर्थात् विश्रामाय पर्वतमिति च व्याचक्षते । आम्रैः क्षेत्रालङ्कृत कूटमस्येत्याम्रकूटः । "क्षुद्रः स्वल्पाधमक्रूरदरिद्रेषु प्रयुज्यते" इति नानार्थाभिधानम् । प्रथममाद्यं शोभनं कृतं करणं सुकृतम् उपकारः । भावे क्तः ; प्रथमं च तत् सुकृतमिति तथा ; तस्य अपेक्षा अभिसन्धानं मननमिति यावत्, प्रथमोपकारस्मरणेन इत्यर्थः । अथवा प्रथमशिरोन्नत

मिह प्रथमोपकारः। "प्रथमसुहृदपेक्षये"ति क्वचित् पाठो लिपिकरप्रमादकृतः मुक्तच्छन्दस्य दान्तत्वात्। आर्ण पुष्पोऽपेक्षाशब्द इति कश्चित्, कुव्याख्येयम्। प्रथमसुहृदेति तृतीयान्तमपेक्षयेत्यस्य विशेषणं, प्रथमः सुहृद् यस्या-मिति बहुव्रीहिरिति कश्चित्। इदमपि न सत्। सुहृदेत्येव पाठो बहुप्राचीनपुस्तकेषु दृश्यमानत्वात्। संश्रयायेति तादर्थ्ये चतुर्थी, तुमर्थे वा, आश्रयं कर्तुमित्यर्थः। प्राप्ते मित्रे इति भावे सप्तमी, विषये वा। प्राप्तं मित्रमनादृत्य अनादरे सप्तमीति केचित्। अस्य श्लोकस्य पाठः क्वचिदध्वक्लान्तमित्यस्मात् पूर्वं दृश्यते, स तु न युक्तो वक्ष्यमाणश्लोके आम्रकूटस्य वर्णितत्वात् ॥१८॥

छन्नोपान्तः परिणतफलद्योतिभिः काननाम्रै-
स्त्वय्यारूढे शिखरमचलः स्निग्धवेणीसवर्णे।
नूनं यास्यत्यमरमिथुनप्रेक्षणीयामवस्थां
मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः ॥१९॥

स्वामासाद्यामरमिथुनप्रेक्षणीयोऽसौ भविष्यत्यतोऽपि त्वां वक्ष्यतीति प्रतिपादयमानकूटं वर्णयन्नाह। छन्नो। स्निग्धवेणीसवर्णे चिक्कणकेशविन्यासविशेषसमाननीलवर्णे त्वयि शिखरं श्रृङ्गम् आरूढे अधिष्ठिते सति परिणतफल द्योतिभिः पक्वफलशोभिभिः काननाम्रैर्वनाम्रवृक्षैश्छन्नोपान्त आमूलपर्यन्तोऽचलः पर्वत प्रकृत्या चतुर्दिक्षु रम्ययोग्य-त्वावाऽऽम्रकूटो मध्ये भागे श्यामश्चुचुकयोगान्नील. शेषविस्तारे अवशिष्टपरिणाहे पाण्डुर्यौवनोद्भेदात् पाण्डुरो भुवः पृथिव्याः स्तन इव अमरमिथुनप्रेक्षणीयां देवस्त्रीपुरुषदर्शनीयाम् अवस्थां यास्यति नूनं शङ्के। परिणतपदेन पैङ्गल्य-मभिप्रेतम्। काननाम्रैरित्यनेनाम्रकूटस्यान्वर्थता ध्वनिता। कानने स्थिता आम्राः स्वनामख्याता वृक्षाः काननाम्रा.। केचित्तु वलयाकारपरिवेष्टनाकृतिराम्रः काननाम्र इत्याहु.। काननाम्रो वनाम्र इति ख्यात आम्रविशेष इति केचित्। गिरेः स्तनाकारतां तर्कयन् स्वनारीवेणीं स्मृतवानिति वेण्या दृष्टान्तयति, तद्वेण्याश्च शापसमये अस्नातत्वात् स्निग्धेति विशेषणम्। विरहित्वाद्वा तामेव पश्यतीति कार्ष्ण्ये वेणीमेव दृष्टान्तयति, तथा च 'सा सैव तथैका त्रिभुवनमपि तन्मयं विरहे" इति। अन्यच्च,"पश्यामि तामित इतः पुरतश्च पश्चादन्तर्बहिः परित एव च वर्त-मानामि"ति। स्निग्धश्चासौ वेणीसवर्णश्चेति केचित्। नूतमुत्प्रेक्षायाम्। अमरमिथुनप्रेक्षणीयत्वे स्तनसादृश्यं हेतुः। ननु मिथुनग्रहणेन किमत्र तात्पर्यम्, नहि स्त्रीणां स्तनदर्शनाकांक्षा भवति। सम्भोगैकचित्तस्य मिथुनस्य वस्त्वन्तरनिरूपणे समादराभावेऽपि मिथुनेन कौतुकाद् दृश्यते इति रमणीयकत्वातिशयध्वनिः। स्त्रिया. किमेकोऽपि स्तनो भवतीति विस्मयात् स्त्रीभिरपि दृश्यत इति वा। ननु अग्रे श्यामत्वं ननु मध्ये? सत्यं, मण्डलाकारस्य स्तन-भारस्याग्रभागे मध्यबुद्धिरुपजायते इत्यदोष.। मध्यशब्देनाग्रभागोऽप्युच्यते इति च वदन्ति। गिरिरपि मध्ये श्यामः श्यामपाषाणत्वात्, श्रृङ्गे पार्श्वतोऽपि मेघाध्यासात् शेषविस्तारपाण्डुश्च तथाविधाम्रव्याप्तत्वात्। ननु स्तनौ द्वौ वर्णनीयौ कथं स्तन इत्युक्तम्? सत्यं, विदग्धा नायिका एकमेव स्तनं दर्शयन्ति अन्यथा धाष्टर्यप्रसङ्गात्। तथा च "आवृणोति प्रयत्नेन विदग्धैकस्तनं सदा। निवृणोति तथा चैकं यूना चित्तापकर्षणे" इति, "सव्याजमंशुका-क्षेपादेकं प्रदर्शयेत् स्तनमि"ति च। एकस्य स्तनस्य काननाम्रैरावृतत्वाददर्शनमिति स्तन इत्युक्तमित्यन्ये। किमत्रानेकस्तनवितर्केण यत. स्तनाकारस्तावदयं प्रतिभाति, उक्तञ्च, "किमु तर्कवितर्काभ्यां प्रतीतिस्तावदी-दृशी"ति केचित्। "पाण्डुस्तु पीतभागार्द्धः केतकीधूलिसन्निभ" इति शब्दार्णवः ॥ १९ ॥

स्थित्वा तस्मिन् वनचरवधूभुक्तकुञ्जे मुहूर्तं
तोयोत्सर्गद्रुततरगतिस्तत्परं वर्त्म तीर्णः।

रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णां
भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥ २० ॥

क्षीणः क्षीणः परिलघु पयः श्रोतसाञ्चोपयुज्येति प्रत्ययितुमाह ।—स्थित्वा । वनचराणां किरातादीनां वधूभिर्वनिताभिर्भुक्ता उपभुक्ताः क्रीडार्थं सेविताः कुञ्जा लतामण्डपा यत्र तादृशे तस्मिन्नाम्रकूटे मुहूर्तं स्थित्वा तथाविधरम्यस्थानप्राप्तावपि मदुपरोधात् क्षणं विश्रम्य तोयोत्सर्गात् पूर्वगृहीतस्य जलस्य त्यागात् द्रुततरगतिः सन् शीघ्रतरगमनः सन् तत्परं तस्मात् आम्रकूटात् परं वर्त्म पन्थानं तत् प्रसिद्धं परमूर्ध्वं वर्त्म वा तीर्णोऽतिक्रान्तः सन् त्वम् उपलैः प्रस्तरैर्विषमे विसदृशे निम्नोन्नते विन्ध्यस्य स्वनामप्रसिद्धस्य पर्वतस्य पादे प्रत्यन्तपर्वते विशीर्णां खण्डखण्डीभूताम् इतस्ततो गतां रेवां नर्मदानदीं गजस्याङ्गे भक्तिच्छेदैर्लेखाखण्डैर्विरचितां निर्मितां भूतिं मण्डलमिव द्रक्ष्यसि अवलोकयिष्यसि । गजमण्डलं नानावर्णं चित्रोपलरश्मिभिर्नर्मदापि नानावर्णेति साम्यम् । भूतिर्नर्मदा चात्र शुभ्रैव वाच्या, रेखा कठिनीभवैव बोद्धव्या, रेखायाः शुभ्रत्वादित्यन्ये । वनचरेत्यादिना त्वद्दर्शनोत्कवध्वः कुञ्जे विहरिष्यन्तीति परप्रीतिहेतुत्वं ध्वनितम् । केचित्तु मुहूर्तमिति पदेन त्वया चिरं तत्र न स्थातव्यं यतस्तद्दर्शनेन लज्जातो वनचरवधूनां रतिविघ्नो भविष्यतीति व्यज्यते, अतएव भुक्तेत्युक्तं नतु भुज्यमानेतीत्याहुः । द्रुततरगतिरिति स्वोत्कण्ठासूचकम् । द्रक्ष्यसीति तृषार्तो जलदर्शनेनापि प्रथमं सुखक्रमो जायते इति दर्शनमुक्तम् । विशीर्णत्वं चिह्नध्वनिः, "भक्तिर्विलेपे लेखाया सेवायामपि कथ्यते" इति बलः । भक्तिर्विभागो रचना वा, छेदो भेदः कौटिल्यं वेति च वदन्ति । "भूतिः स्यात् भस्म-सम्पत्योर्भूतिस्तु करिमण्डले" इति रन्तिः । गजपदमुक्तिपोपार्यम् ।

अत्र कविना नद्योऽप्यनायिकात्वेन वर्णनीया. तत्रेय नदी वासकसज्जा, तथाच—

"सज्जीभूता गृहे कान्तं कामिनी या प्रतीक्षते ।
नाम्ना वासकसज्जा सा विदग्धैरभिधीयते ॥" इति ।

तत्र मेघो नायकः, रेवा नायिका, विन्ध्यपादः क्रीडास्थानम्, उपलवैषम्येण नानाप्रसङ्गादिचित्रवेशत्वम्, विशीर्णत्वेन द्वारदेशादिगतागतध्वननात् कान्तस्य मेघस्य प्रतीक्षा । अन्ये तु पादपतनशब्दश्लेषेण रेवाविन्ध्ययोर्नायकनायिकाभावो दर्शितः । अत्रापि नायिका प्रणयकलहकुपितस्य नायकस्य पादे पततीति ध्वनिरित्याहुः ॥२०॥

तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टि-
र्जम्बूकुञ्जप्रतिहतरयं तोयमादाय गच्छेः ।
अन्तःसारं घन तुलयितुं नानिलः शक्ष्यति त्वां
रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ॥ २१ ॥

तृषार्तो रेवाजलं पीत्वा गमिष्यसीति दर्शयन्नाह । तस्या । वान्ता उद्गीर्णा आविष्कृता वृष्टिर्वर्षं येन तादृशस्त्वं तिक्तैः सुगन्धिभिस्तिक्तरसयुक्तैर्वा वनगजानाम् अरण्यहस्तिनां मदैर्दानजलैर्वासितं सुरभीकृतं भावितं वा जम्बूभिर्वृक्षभेदैरुपलक्षिता ये कुञ्जा निकुञ्जास्तत्र प्रतिहतो निवारितो मन्दीभूतो रयो वेगो यस्य तादृशं, तस्या रेवायास्तोयं जलम् आदाय गृहीत्वा गच्छेः यापयेः । कः तोयग्रहणोपदेशः क्रियते इत्याह, एव गति हे घन मेघ, अन्तर्मध्ये सारो जलम् अथच बलं यस्य तादृशं त्वां तुलयितुं सञ्चारयितुं यत्र तत्र नेतुम् अनिलो वायुर्न शक्ष्यति न पारयिष्यति । कुतो न शक्तो भविष्यतीत्युक्तार्थसाधनं साधर्म्यवैधर्म्याभ्यां दृष्टान्तरूपेणार्थान्तरन्यासमाह, हि यस्मात् रिक्तस्तुच्छोऽपयच निर्धनः सर्वो जनो लघुस्तुच्छोऽपय अनादरणीयो भवति, पूर्णता अनु-

च्छता अथच सघनता गौरवाय अनुल्लङ्घनीयत्वाय अथच आदराय भवति। केचित्तु तस्यास्तोयमादाय त्वं गच्छेः, जलभरेण गुरुः कथं यास्यामीत्याह वान्तवृष्टिः सन्नित्याहुः। तिक्तैर्मदैर्वासितमित्यनेन जलस्य सेव्यत्व ध्वनितम्। यदुक्तं सौदशास्त्रे,—

"कषायैः सवृत शीत नीरमिष्टाभिवासितम्।
अथवा तिक्तयुक्तञ्च योजयेत् पानकर्मणी"ति॥

"तिक्तो रसे सुगन्धे चे"ति विश्वः। "वासित भावित प्रोक्तं वासित सुरभीकृत"मिति बलः। केचित्तु तिक्तैर्मदैर्वासितं विरसीकृतम्, एतेन परोपकारितया विरसमपि ग्राह्यमिति भाव इत्याहुः। जम्ब्विल्यादिना-दानकर्मणि प्रबलश्रोतसि कथं यास्यामीत्याशङ्का निरस्ता, परिणतजम्बूफलयोगात् सुरसता च ध्वनिता। "सारो बले स्थिरांशे च मज्ज्नि पुंसि जले धने" इति विश्वः॥ २१॥

नीपं दृष्ट्वा हरितकपिशं केशरैरर्धरूढै-
राविर्भूतप्रथममुकुलाः कन्दलीश्चानुकच्छम्।
दग्धारण्येष्वधिकसुरभिं गन्धमाघ्राय चोर्व्याः
सारङ्गास्ते जललवमुचः सूचयिष्यन्ति मार्गम्॥ २२॥

नन्वसूचितेन पथा कथं यास्यामीत्याशङ्क्य मार्गोपदेशकी भवतो भविष्यतीत्याह। नीपं। सारङ्गाश्चातकाः पक्षिणो नीपं कदम्बकुसुमं दृष्ट्वा तथा अनुकच्छं कच्छे कच्छे कच्छसमीपे वा कन्दलीः स्वनामख्यातपुष्पविशेषान् दृष्ट्वा तथा उर्व्याः पृथिव्या दग्धारण्येषु दावाग्निप्लुष्टवनप्रदेशेषु गन्धम् आघ्राय शिङ्घित्वा उपलभ्य जललवमुचो जलकणान् मुञ्चतस्तव मार्गं पन्थानं सूचयिष्यन्ति कथयिष्यन्ति अग्रेसरत्वात्तव। नीपं किम्भूतम्? अर्धरूढैरर्धजातैरर्धविकसितैर्वा केशरैः किञ्जल्कैर्हरितकपिशं पालाशपिङ्गलम्, एतद्दर्शनीयादिकं लक्षणमनुचितम्, अत एव सूचयिष्यन्तीत्युक्तम्। उक्तञ्च, "चिह्नैरन्वेषणं सूचन"मि"ति। जललवमुच इति चातकानुगतौ कारणम्। चन्द्वयं समुच्चये।

"कन्दलः कदली चेति मृगपुष्पप्रभेदयोः" इति धरणिः।

कन्दली धूम्रपुष्पा, तृणविशेष इत्यन्ये, व्याख्यान्तरञ्च कुर्वन्ति, तद्यथा; सारङ्गाश्चातका हरिणा मातङ्गाश्च एकशेषेण वाच्याः, उक्तञ्च,

"मृगचातक-मातङ्गाः सारङ्गाः सम्प्रकीर्तिता" इति,

अन्यच्च

"सारङ्गः शबले स्यातश्चातके हरिणे गजे" इति।

सारं जलं गायन्ति जल देहीति वदन्तीति सारङ्गाश्चातकाः ऊर्ध्वचारित्वात् नीपं दृष्ट्वा जलकणप्रचाराय तव मार्गं सूचयिष्यन्ति। सारं बलवद्गच्छन्तीति सारङ्गा हरिणाः, अधश्चारित्वात् कन्दलीर्दृष्ट्वा सूचयिष्यन्ति, ता हि तेभ्योऽतिरोचन्ते। सारमुत्कर्षं गच्छन्तीति सारङ्गा गजाः, अन्तरालचारित्वात् उर्व्या गन्धम् आघ्राय सूचयिष्यन्ति, स हि तेभ्योऽभिरोचते। अत्र एवैते मेघानुसारिणः, तथाहि, चातको मेघमल्लारः प्रसिद्ध एव, मृगाश्च तृषिता मरीचिकामप्यनुधावन्ति किं पुनर्मेघम्। गजाश्च दावाग्निताः शुष्कगात्रदर्शनमपि कुर्वन्ति मेघानुसरणे पुनः किं वाच्यम्। सर्वेषां त्वमुपकारीति तात्पर्यम्। जललवमुच इति साभिप्रायम्। तथाहि यदि बलानी वृष्टिः स्यात्तदा नीपेत्यादयः शीर्येरन् कन्दल्यो दलिताः पृथिव्या गन्धमहितत्वम् एवादिति। केचित्तु सारं मधुर

गायन्तीति सारङ्गा भ्रमराः तेऽपि कदम्बमर्धविकसितं दृष्ट्वा सम्पूर्णमधुलाभाशया तत्र मार्ग सूचयिष्यन्ति। "सारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गजे" इति विश्व इत्याहुः। जातिश्लेषसङ्करोऽयमलङ्कारः ॥२२॥

अम्भोबिन्दुग्रहणरभसांश्चातकान् वीक्षमाणाः
श्रेणीभूताः परिगणनया निर्दिशन्तो बलाकाः।
त्वामासाद्य स्तनितसमये मानयिष्यन्ति सिद्धाः
सोत्कम्पानि प्रियसहचरीसम्भ्रमालिङ्गितानि ॥ २३ ॥

महाजनश्लाघया तथाविधाङ्गनाचेष्टानुभूतिजातकामसम्पत्त्या च प्रोत्साहयन्नाह। अम्भो। सिद्धाः सिद्धपुरुषाः अम्भसां जलानां ये बिन्दवः कणास्तेषां ग्रहणे आदाने रभसो हर्षो येषां तान् चातकान् पक्षिणो वीक्षमाणा विशेषान् पश्यन्तस्तथा श्रेणीभूताः पङ्क्तिभूता बलाका बिसकण्ठिकाः परिगणनया एक-द्वि-त्रि-चतुःक्रमेण परिसंख्यया निर्दिशन्त उद्दिशन्तः कथयन्तः स्तनितसमये गर्जितावसरे सोत्कम्पानि गर्जितभयादिव उद्गतवेपथुसहितानि प्रियसहचरीणां प्रियवनितानां सम्भ्रमेण त्वरया गाढतया वा आलिङ्गितानि आश्लेषान् आसाद्य प्राप्य त्वां मानयिष्यन्ति श्लाघयिष्यन्ति। मानिन्यो हि मेघध्वनिसम्भ्रान्ताः कान्तमालिङ्गन्ति। अत एव तत्कालदुर्लभमानिन्यालिङ्गनलाभेन "साधु चेष्टितमस्य धन्योऽयमि"ति त्वच्छ्लाघां करिष्यन्तीत्यर्थः। त्वामासाद्य आलिङ्गनानि मानयिष्यन्तीत्यन्ये। सिद्धानामपि त्वमुपकारीति प्रोत्साहनम्। "रभसो वेगहर्षयो" रिति विश्वः। तादृशचातकदर्शनेन तादृशबलाकागणनानिर्देशेन च सम्भोगसमये चिरसुरतवाञ्छया स्वस्य कामिन्याश्च अन्यमनस्कताकरणं ध्वनितम्। नायिकायास्तु दर्शनादिकमाक्षेपमिदम्। ईक्षा-दिशौ अन्तर्भावितण्यर्थौ वा। अन्यासक्ता हि योषिच्चिरं रमयति; तदुक्तं, "अन्यार्पितमनोदृष्टिः श्लथोऽपि रमते चिरमि"ति, "अन्यत्रासक्तहृदया रमणी रमते चिरमि"ति। सिद्धा इह लब्धसिद्धाञ्जनगुटिकादिसिद्धय इति **टीकाकाराः**। सोत्कम्पानीति एतादृशमालिङ्गनं सात्त्विकीं प्रीतिं सूचयति,

"रोमाञ्चो वेपथुः स्वेदो वलिते च विलोचने।
मज्जन्त्या इव गात्रेषु सश्लेषस्तृप्तिलक्षणम्" इति ॥२३॥

उत्पश्यामि द्रुतमपि सखे मत्प्रियार्थं यियासोः
कालक्षेपं ककुभसुरभौ पर्वते पर्वते ते।
शुक्लापाङ्गैः सजलनयनैः स्वागतीकृत्य केकाः
प्रत्युद्यातः कथमपि भवान् गन्तुमाशु व्यवस्येत् ॥ २४ ॥

प्रतिपर्वतं नानाविधरम्यस्थानप्राप्त्यादिना विलम्बमवधारयन् विलम्बहेतावपि विलम्बो न कार्य इति गमनत्वरामुपदिशन्नाह। उत्। हे सखे मित्र, मत्प्रियार्थं मम प्रीत्यर्थं मम भार्यानिमित्तं वा द्रुतमपि शीघ्रमपि यियासोर्गन्तुमिच्छोस्ते तव ककुभसुरभौ अर्जुनपुष्पसुगन्धौ पर्वते पर्वते प्रतिपर्वतं सर्वस्मिन्नेव पर्वते कालक्षेपं कालविलम्बम् उत्पश्यामि उत्प्रेक्षे तर्कयामि, किन्तु भवान् सजलनयनैर्भवद्दर्शनानुरागात् सानन्दाश्रुभिः शुक्लापाङ्गैर्मयूरैः केका निजवाणीः स्वागतीकृत्य सुखेनागतमिति प्रश्नवचनीकृत्य प्रत्युद्यातः कृताभ्युत्थानः सन्नपि कथमपि केनापि प्रकारेण मदुपकारस्मरणधैर्यावलम्बनेन आशु शीघ्रं गन्तुं यातुं व्यवस्येत् व्यवसायं कुर्यात्। प्रार्थनायां लिङ्। सखे इति सम्बोधनमवश्यकर्तव्यताद्योतनार्थम्। ननु भ्रातृजायामिति प्रागुक्तम्, स च भ्राता सखे इति सम्बोध्यते? उच्यते, कल्पितसम्बन्धात् प्रियोक्तिमात्रमेतदिति, विकल्पाद्वा न दोषः। "द्रुतः

सैकतभ्रम, वकदर्शनात् हंसकुलभ्रम, श्यामजम्बूदर्शनात् जलभ्रान्तिरित्याहु । त्वयि आसन्ने समीपगते सति तेषा तत्र स्थितिरित्यन्ये । केचित्तु अकतिपयदिनस्थायिहंसा इति अकारप्रश्लेषं कुर्वन्ति। तत्र त्वयैव सह गमनादस्थायिनो हंसा यत्रेत्यर्थ । दश ऋणानि जलदुर्गाणि यत्र ते दशार्णा जनपदा· ॥२५॥

> तेषां दिक्षु प्रथितविदिशालक्षणां राजधानीं
> गत्वा सद्यः फलमतिमहत् कामुकत्वस्य लब्धा ।
> तीरोपान्तस्तनितसुभगं पास्यसि स्वादुयुक्तं
> सभ्रूभङ्गं मुखमिव पयो वेत्रवत्याश्चलोर्मि ॥ २६ ॥

अनन्तर दशार्णराजधानीं यास्यसि तत्र वेत्रवतीनदीजल पास्यसीति प्रतिपादयन् काममम्पत्त्या प्रोत्साहयितु माह । तेषा । तेषा दशार्णाना राजधानीं राजाधिष्ठितनगरीं कटक गत्वा सद्यो गमनक्षणमेव अतिमहत् अतिशयित कामुकत्वस्य कामिताया फल शृङ्गारनिष्पाद्य लब्धा लब्धव्य त्वयेत्याक्षेपात् कर्मणि डी, लब्धा लप्स्यते भवानित्याक्षेपात् कर्तरि डी वा । किंभूता राजधानीम् ? दिक्षु पूर्वादिषु सर्वासु प्रथित ख्यात विदिशेति लक्षण नाम यस्या स्ता विदिशेति सर्वत्र प्रसिद्धा शङ्ककस्य पुरीमित्यर्थ । किन्तत् फलमित्याह वेत्रवत्या नद्या नायिकाया पयो मुखमिव त्व पास्यसि । कीदृश पयो मुखञ्च ? तीरस्य कूलस्य उपान्ते समीपे यत् स्तनित शब्द खनन्खनदितिस्वस्तेन सुभग सुन्दरम् आह्लादक पक्षे तीरमिवोपान्त समीपदेशस्तत्र स्तनित निषेधपरिकल्पित हु हु मनेत्यादिव, तेन सुभग मनोरमम् । तथा स्वादुयुक्त माधुर्ययुक्तम् । स्वादु युक्तमिति पाठे स्वादु मधुर, युक्त पाने योग्यम्, उभयत्र तुल्यम् । कीदृश पय ? चलाश्चञ्चला ऊर्मयस्तरङ्गा यस्य तत्तथा । मुख कीदृशम् ? भ्रूभङ्गेन भ्रुकुट्या सह वर्तमानम् । लब्धा साधु लभमान सन् पय पास्यसीति च व्याचक्षते, तत्र साध्वर्थे तृन्, तद्योगे कर्मणि न षष्ठी । लब्धेति क्त्वान्तपाठे राजधानीं गत्वा कामुकत्वस्य विलासित्वस्य फल विलासिनीविलोकनादिक लब्ध्वा प्राप्य त्व वेत्रवत्या पयो मुखमिव पास्यसि । कलहान्तरिता नाम नायिकेय नदी, अत एव मा विहाय कुत्र गताऽसीति प्रिये कोपात् भ्रूभङ्ग । हठाच्चुम्बने हु हु मनेत्यादिनिषेधवचन स्तनितम् । तथाच, "उन्नमय्य सकचग्रहमास्य चुम्बति प्रियतमे हठवृत्या । हुं हु मुञ्च मममेति च मन्द जल्पित जयति मानवतीना" मिति । कलहान्तरितालक्षणमाह भरत

> "सापराध प्रिय मत्वा या कोपेन पराङ्मुखी ।
> कलहान्तरिता नाम नायिकाऽसौ निगद्यते" ॥ इति ।

तीरोपान्तस्तनितसुभग स्वादुयुक्त सभ्रूभङ्गमिति च सर्वं क्रियाविशेषणत्वेन च नायक मपेऽपि याजयन्ति । विदिक् वायव्यादिदिक् आश्रयत्वेन विद्यतेऽस्या इति विदिशा, अर्श आदित्वादच् । "लक्षण नाम्नि चिह्ने चे" ति विश्व· । राजा धीयतेऽस्यामिति राजधानी, आधारेऽनट् ॥ २६ ॥

> नीचैराख्यं गिरिमधिवसेस्तत्र विश्रामहेतो-
> स्त्वत्सम्पर्कात् पुलकितमिव प्रौढपुष्पैः कदम्बैः ।
> यः पण्यस्त्रीरतिपरिमलोद्गारिभिर्नागराणाम्
> उद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि ॥ २७ ॥

इतःपरम मेघस्य गुणाग प्रतिपादयन्नाह । नीचै । तत्र अस्यानन्तरं प्रौढपुष्पैर्विकसितकुसुमैर्कदम्बैः (?) कदम्बाख्यैस्तरुभिरकर्तृ त्वत्सम्पर्कात् पुलकितमिव नीचैराख्य नीचैर्नामान गिरि पर्वत—विश्रामहेतो विश्राम निमित्त त्वम् अधिवसेः अधिष्ठाय वर्त्तस्व, यो गिरि पण्यस्त्रीणां वेश्याना रतौ सुरतक्रीडाया परिमलं विमर्दादि-

विमर्दसम्भवगन्धम् अभीक्ष्णम् उद्गिरन्ति उद्वमन्ति यानि तैः शिलावेश्मभिः पाषाणगृहैः कन्दरैर्भोगराणां निर्दयानाम् उद्दामानि उद्भटानि यौवनानि तारुण्यानि प्रथयति प्रकाशयति कथयति । नीचैराख्यमिति नीचैरिति आख्या नाम यस्य स तथा तं नीचैराख्यम्; अप्रसिद्धनामानं यं कमपीत्यन्ये । अश्लीलत्वात् नीचैः शनैरुच्चारणीया आख्या नाम यस्य, सहि भगनामा गिरिः काटगिरिरिति स्यात् इति केचित् । गिरिमिति "कर्म क्रिये" त्यादिना आधारस्य कर्मत्वम् । तत्रेति सामीप्ये सप्तमी, वेत्रवतीतीरे इत्यर्थः । कदम्बैः पुलकितमित्यनेन हृष्टः सन् असौ सुहृदिव धारयिष्यतीति ध्वनितम् एवं गिरेरत्युच्छ्रितत्वम् ध्वनित, न तु नीचैर्नामत्वेन तस्य खर्वता । पण्येति पण्यसाध्याः स्त्रियः पण्यस्त्रियो वेश्याः ।

"यूनोरन्योन्यसम्भोगविमर्दव्यतिमिश्रिते ।
सौरभे स्यात् परिमलः शुभगन्धे तथैव च" ति ॥ रन्तिदेवः ।

उद्गतम् अपगतं दाम लज्जारूप रज्जुर्येषु तानि उद्दामानि विच्छिन्नलज्जारज्जूनि । नागरोपभोग्यत्वेनासौ तव गम्योग्य इति ध्वनितम् । इहान्येषां व्याख्यान्तरमहृद्यत्वाद् ग्रन्थगौरवभयाच्चोपेक्षितम् ॥२७॥

**विश्रान्तः सन् व्रज नवनदीतीरजातानि सिञ्च-**
**न्नुद्यानानां नवजलकणैर्यूथिकाजालकानि ।**
**गण्डस्वेदापनयनरुजा क्लान्तकर्णोत्पलानां**
**छायादानात् क्षणपरिचितः पुष्पलावीमुखानाम् ॥ २८ ॥**

अनन्तर यूथिकाजालकविह्नेन गमिष्यमीति प्रतिपादयन् मालाकारवधूदृष्टिपातजातकामसम्पत्त्या प्रोत्साहयन्नाह । विश्रान्तः । त्व विश्रान्तः सन् पर्वताधिवासात् गतखेदः सन् नवजलकणैर्नूतनतोयबिन्दुभिर्नवनया नवनदीनाम-नदीविशेषस्य तीरे कूले जातानि उत्पन्नानि उद्यानाना क्रीडाकाननानां यूथिकाजालकानि यूथीकलिकाः सिञ्चन् गण्डयोः कपोलयोः स्वेदस्य घर्मजलस्य अपनयनं दूरीकरणं तेन या रुक् हस्तवस्त्राञ्चलजनिता पीडा तया क्रान्तानि व्याकुलानि मलिनानि कर्णयोरुत्पलानि अवतरीकृतानि कुवलयानि येषां तादृशानां पुष्पलावीमुखानां मालाकारवधूवदनानां छायादानात् अत्र छायेति प्रसिद्धच्छायार्पणात् क्षण मुहूर्तं परिचितः प्रियः सन् प्रीतिजनकत्वेनावलोकितः सन् प्राप्तसुहृद्भावः सन् व्रज गमिष्यसि । यूथिकाजालकानि सिञ्चन्निति चिह्नध्वनिः । तीरजातत्व चिह्नभेदः । केचित्तु नवानि नूतनानि च तानि नदीतीरजातानि चेति विगृह्णन्ति नवत्वेन रम्यत्व सूचितमित्याहुः । केचित्तु नगनदीति पठित्वा नगनदी नीचैर्गिरिप्रभवा नदीति । वननदीति केचित् पठन्ति । नवजलकणैरिति जलसेकविकसिताभिर्यूथिकाभिः पुष्पोपजीविनामुपकारो ध्वनितः, नवत्यनेन प्रथमलाभादाह्लादकतातिशयो ध्वनितः । वर्षणाल्पता द्योतयितु कणपदं प्रयुक्तं; यदि प्रचुरं वर्षसि तदा पुष्पलावीपलायनात् तासां मुखं स्वच्छन्दं त्वं न द्रक्ष्यसि तास्त्वां सुख न द्रक्ष्यन्ति, एवं यूथिकाविनाशः स्यात् । अत एव जलकणवर्षणेन मालिनीनामुपकारस्तद्दर्शनप्रतिपादनेन तस्य च प्रोत्साहनं सूचितम् । आतपादिक्रान्तानां हि प्रीतिहेतुश्छाया भवति, अत एव गण्डस्वेदेत्यनेन आतपक्रान्तत्वं सूचितम् । रुजेति रुक्शब्दात् तृतीया, रुजाक्रान्तेति समस्तमपि वदन्ति, आक्रान्तरुजाशब्दस्यापि वर्तमानत्वात् । छायादानादित्यनेन छायाद्वारेण स्पर्शनादि-प्रीतिप्राप्तिलक्षणः परिचयोऽप्युक्त इति च वदन्ति । पुष्पं लुनातीति टात् पण्णिति पणि पुष्पलावी मालिनी, पुष्पलावीपदेन पुष्पोत्तोलनतत्परत्वमात्रमुच्यते इति च वदन्ति । कौमुदीकृत्तु गण्डस्वेदापनयनरुजाक्रान्तकर्णोत्पलानां रतिविमर्दसमानावस्थानां मुखाना विच्छित्तिरिति विलासः सूचितः । उक्तञ्च—

"आक्षेपात् स्तोकलक्ष्योऽपि विलासो मण्डनस्रजा ।
सूचयन्ती रतिश्रान्तिं विच्छित्तिः कामिना मता" ॥ इति ।

तदनन्तरमुखानां छायादानोपकारो युक्त एव । यदुक्तं,

तस्याः कपोलविलसत्पनाणामुज्ज्वलत्विष ।
रैस्तैर्ललितोपचारैर्हरेत् स्वेदलवान् प्रिय" इतीत्याह ॥ २८ ॥

**वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तराशां**
**सौधोत्सङ्गप्रणयविमुखो मा च भूरुज्जयिन्याः ।**
**विद्युद्दामस्फुरणचकितैस्तत्र पौराङ्गनानां**
**लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितोऽसि ॥ २९ ॥**

अधुना कामिनमस्या प्रोत्साहयितु वक्रमप्युज्जयनीगमनमुपदिशन्नाह । वक्र । उत्तरामाशा दिशं प्रस्थितस्य चलितस्य भवतस्तव पन्था वर्त्म यदपि यद्यपि वक्र कुटिलस्तथापि उज्जयन्या नगर्या सौधानां राजगृहाणां य उत्सङ्गः क्रोड उपरिभागस्तत्र य प्रणयोऽनुरागस्तत्र विमुखः पराङ्मुखस्त्वं मा च भूर्नैव भविष्यसि, अवश्यमुज्जयनीसौधोपरि स्थितेन त्वया स्थेयमित्यर्थः । ऋजुवर्त्मना स्थिमिति त्वरितमेव न गच्छामीत्याशङ्क्य कामसम्पत्तिमाह, तत्रोज्जयन्यां विद्युद्दाम्ना तडिद्गुणानां स्फुरणेन द्योतनेन चाकचक्येन चकितैश्चमत्कृतैः सभयविस्मितभङ्गुरैः एव लोलश्चञ्चलः सारः पक्ष्मलश्च अपाङ्गः प्रान्तभागो येषां तादृशैः पौराङ्गनानां नागरनारीणां वेश्यादीनां लोचनैर्नेत्रैर्यदि त्वं न रमसे क्रीडसि तदा वञ्चितोऽसि प्रतारितोऽसि लोचनैर्जन्मना वा विप्रलब्धोऽसि निष्फलोऽसीत्यर्थः । वक्र इति, अयमर्थः, यद्यपि युधिष्ठिरप्रदेशाद् गङ्गाद्वारवर्त्मना गन्तव्ये पश्चिमावस्थितोज्जयनीगमने कुरुक्षेत्रमाक्रम्य ईशदेशानदिगभिमुखत्वे वक्रता स्यात्तथापि गमिष्यसीति । अत्र मेघो नायकः उज्जयनी नायिका, तस्या उत्सङ्गः सौध एव । पौराङ्गनानां चक्षुरेव तस्याश्चक्षुरिति ध्वनिः । यदपीति समुदितमव्ययं यद्यपीत्यर्थे । च-शब्दोऽवधारणे, पूर्वश्लोकापेक्षया समुच्चये इत्यन्ये । मा भूरिति माङ्योगे भविष्यति ट । **कौमुदीकारस्तु** विद्युद्दामेत्यादिना चक्षुरिति ध्वनितम्, यदुक्तं कात्यायनेन

"दूरादपाङ्गविन्यस्तं सन्निकृष्टे निकुञ्चितम् ।
प्रीतिचक्षु प्रपातेन भङ्गुरं चक्षुरिरितम् ॥" इति ।

इह लोलापाङ्गत्वादपाङ्गस्थितत्वं चकितत्वेन कुटिलत्वं, विद्युद्दाम च मेघस्य सम्भोगचक्षु प्राप्त इति मन्तव्यमित्याह । केचित्तु जयतीति जयनी, उद्गता जयनी उज्जयनी प्रौढयोषिदुच्यते, विशालत्वात् सौध इव उत्सङ्गः क्रोड सौधोत्सङ्ग उत्तरा स्त्रीशरणानन्तरभाविनी आशा सम्भोगप्रत्याशा । तदयमर्थः, उत्तराशां प्रस्थितस्य स्त्रीशरणानन्तरतोन्मुखस्य तव प्रौढाभिगमनलक्षणो वक्रः पन्था अनुचितं वर्त्म यद्यपि तथापि उज्जयन्यास्तस्याः प्रौढाङ्गनायाः उत्सङ्गप्रणयविमुखो नैव भविष्यसि, किमर्थमयोग्यमनुष्ठानं कर्तव्यमित्याह, तत्र तस्याः नायिकाया यदि न रमसे तदा पौराङ्गनानां तादृशलोचनैर्वञ्चितोऽसि । अयमाशयः, तत्कर्तृकैर्नायिकाभिः सह सङ्गमात् धाष्टर्यविशेषं मन्यमानाः पौरस्त्रियस्त्वद्दर्शनाय चक्षुरिति करिष्यन्तीति व्याचख्युः । ननु कथं रमसे इति, रंस्यसे इत्युचितम् ? उच्यते, युधिष्ठिरादिगमनानन्तरभाविन्युद्धेर्न वर्तमानसामीप्ये वर्तमानलाभाद् भविष्यति की ॥ २९ ॥

**वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः**
**संसर्पन्त्याः स्खलितसुभगं दर्शितावर्तनाभेः ।**

निर्विन्ध्यायाः पथि भव रसाभ्यन्तरं सन्निपत्य
स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु ॥ ३० ॥

उज्जयन्यभिमुखं प्रस्थितः त्वं निर्विन्ध्यां नदीं प्राप्य पयः पास्यसीति प्रतिपादयन् तस्या अभिसारिकावत् शृङ्गारचेष्टाध्वनिना प्रोत्साहयन्नाह । वीचि । निर्विन्ध्याया विन्ध्यान्निर्गतत्वात् निर्विन्ध्यानाम्न्या नद्या अथच ध्वनिना विन्ध्यसुताया नायिकायाः रसाभ्यन्तरं जलमध्यम् अथच शृङ्गाराभ्यन्तरं सन्निपत्य प्राप्य अनुभूय पथि वर्त्मनि त्वं भव भविष्यसि उज्जयनीं गमिष्यसीत्यर्थः । नायिकाचानुगच्छेत्यर्थश्च । कथमनुमतिमप्राप्य सन्निपतिष्यामीत्याशंक्य तदनुमतिं सूचयितुं तां विशिनष्टि । किम्भूतायाः ? वीचेस्तरङ्गस्य क्षोभेण सञ्चलनेन स्तनिता शब्दिता या विहगानां हंससारसादीनां पक्षिणां श्रेणिः पङ्क्तिः सैव पक्षे सैव काञ्चीगुणो मेखलादाम यस्यास्तथाभूतायाः; तथा स्खलितेन इतस्ततः पातेन अथच कामोद्गमचिह्नविभङ्गेन सुभगं मनोहरं यथा स्यात्तथा संसर्पन्त्या वहन्त्या अथ चाभिसाराय सञ्चरन्त्याः, तथा दर्शिता आवर्त एव पक्षे स इव नाभिर्यया तस्याः; उक्तविशेषणत्रयेणानुरागाविष्करणं सूचितं, यदुक्तं

"काञ्च्यादिस्वननं भङ्ग्या गमनं गात्रदर्शनम् ।
यूनः पुरो विदग्धाया मनोरागं प्रकाशये"दिति ॥

अन्यच्च, अधरस्तननाभ्यन्तःश्रोणीकक्षादिदर्शनैः ।
परिरम्भैः स्थितेश्चैव ग्राह्यं तन्नायमिङ्गित"मिति ॥

एतादृशमाविष्कृतमनुरागं दृढयितुमाह, हि यस्मात् प्रियेषु वल्लभेषु दर्शनसञ्जातप्रीतिषु पुरुषेषु स्त्रीणां विभ्रमो भावविशेष आद्यं प्रथमं प्रणयवचनं प्रेमकथन वचनमिव वचनं रतिमानसाविष्करणम्, यदुक्तं

"स्नेहं मनोभवकृत कथयन्ति भावैर्नार्यो भुजस्तनविभूषणदर्शनानि ।
वस्त्राभिसंयमनकेशविमोक्षणानि भ्रूक्षेपकल्पितकटाक्षविधीक्षितानी"ति॥

विभ्रमलक्षणं यथा, "रागोद्रेकक्तताकाररूपयौवनसम्पदा ।
अनवस्थितचेष्टत्व विभ्रमः परिकीर्तितः" ॥ इति ।

अन्यच— "बाहुमूलं स्तन नाभिमूरुमूलञ्च मेखलाम् ।
व्याजतो दर्शयेद् यत्तु वामाऽसौ विभ्रमो मतः" ॥ इति ।

अत एव यथान्या प्रियप्राप्तिसमुत्सुका तथेयमपि । साधर्म्यादभिसारिकेयं नायिकेति ध्वनितम् । अभिसारिकालक्षणं यथा—

"त्यक्ता या लज्जया विद्धा मदेन मदनेन वा ।
अभिसारयते कान्तं विदुस्तमभिसारिकाम्" ॥ इति ।

**केचित्तु** नायिकापक्षे वीचिक्षोभो मुखक्षोभस्तेन स्तनितः शब्दितो विहगश्रेणिरिव नानाविचित्रवर्णत्वात् काञ्चीगुणो रशनावलापो यस्याः, प्रशस्तावर्तयुक्ता नाभिरावर्तनाभि , प्रशंसायामर्श आदित्वादत् ।

"वीचिः स्वल्पतरङ्गे स्यादवकाशे सुखेऽपि चेति" विश्वः ।

"विहगाः पक्षिणो प्रहा" इति ध्वनिरित्याहुः । श्लेषसमर्थान्तरन्याससङ्कीर्णमिदम् ॥ ३० ॥

वेणीभूतप्रतनुसलिला तामतीतस्य सिन्धुः
पाण्डुच्छाया तटरुहतरुभ्रंशिभिः शीर्णपर्णैः ।

सौभाग्यं ते सुभग विरहावस्थया व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥३१॥

निर्विन्ध्यातो गतिस्तरामुपदिशन् सिन्धुनदी वेण्यादिना विरहिणीव लक्ष्यते तत्र मद्विरहिणीतर्पणप्रवृत्त त्वविरहिणीमेव तावत्तर्पयेरिति प्रतिपादयन्नाह । वेणी । हे सुभग, सिन्धुः सिन्धुनाम्नी नदी नायिकेव विरहावस्थया वियोगदशया तां निर्विन्ध्याम् अतीतस्य अतिक्रम्य गतस्य ते तव सौभाग्य व्यञ्जयन्ती प्रकाशयन्ती येन विधिना प्रकारेण कार्श्यं दौर्बल्य त्यजति मुञ्चति स विधिर्व्यापारविलक्षणस्त्वयैव उपपाद्यः कार्य, त्वयैव नान्यस्तत्र क्षम इत्यर्थः । स एव विधिस्त्वया करणीय इति वा युक्तस्यात् । नद्या ह्रदस्य स्वल्पजलता, प्रोषितभर्तृकामा यस्यान् प्रोषितभर्तृकेव नदीति श्लेषः । तथाच,—

"नानाकार्यार्थसम्बन्धाद् यस्या विप्रोषित पति ।
सा रुक्षालकवेणीका भवेत् प्रोषितभर्तृकेति" ॥

विरहावस्थां दर्शयन्नाह, सा कीदृशी? वेणी केशबन्धभेदस्तद्भूत तत्प्राय प्रतनु स्वल्प सलिलं जल यस्याः सा तथा, भूतशब्दोऽत्र सादृश्यार्थः,"युक्ते क्ष्मादावृते भूत प्राण्यतीते समे त्रिषु"त्यमरः। तथा तटरुहास्तीरसञ्जाता ये तरवो वृक्षास्तेभ्यो भ्रंशिभि: पतद्भि: शीर्णपर्णैः शुष्कपत्रै पाण्डुः पाण्डुरा छाया कान्तिर्यस्या सा तथा, अन्यापि विरहिणी एतादृशी भवति । वेणीं भूता प्राप्ता वेण्या भूता युक्ता वा वेणीभूता, प्रतनुम् अतिशय तनो: शरीरस्य, एकदेशे समुदायस्योपचारात नेत्रस्य, सलिल जलम् अश्रु यस्याः सा तथा, तत कर्मधारय, पुंवद्भावादापो निवृत्ति । तथा तटे स्तनतटे तत्र रोहत इति तटरुहौ स्तनौ तौ तरुवत् विशालोन्नतत्वात् ततो भ्रंशिभिः शीर्णपर्णैर्विशीर्णपत्रावलीविशेषैः पाण्डुच्छाया अश्रुगलितपूर्वदत्तपत्रावलीव्याप्तगात्रेत्यर्थ । सुभगेत्यनेन त्व तस्या सुभगः सापि तव सुभगेति युक्तमकार्श्यकरणम्, दुर्भगविरहे हि तथाविधावस्थैव न जायते इति सूचितम् । अय भाव, यथान्या कामिनी नायकविरहे वेणीं बध्नाति पाण्डुकान्ति वहति तनुत्व धारयति तथेय नदी भवद्विरहे, यथा नायकः समागम्य तादृश्या नायिकायास्तत् सर्वं दूरीकरोति तथा त्वमस्या इति । किञ्च तस्या अनुकम्पनीयता दर्शयता स्वकान्ताया अपि कृपापात्रता व्याख्यिता ॥३१॥

प्राप्यावन्तीमुदयनकथाकोविदग्रामवृद्धां
पूर्वोद्दिष्टामनुसर पुरीं श्रीविशालां विशालाम् ।
स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां
शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत् खण्डमेकम् ॥३२॥

सिन्धुप्रदेशात परमवन्तिमण्डल गत्वा उज्जयनीमनुसरिष्यसीति ,प्रतिपादयन् उज्जयनीप्रोज्ज्वलशोभया प्रीतमाह्वयन्नाह । प्राप्या । अवन्तीं पुरीं देश वा प्राप्य आसाद्य उदयनस्य वत्सराजस्य कथायां चरितकीर्तने कोविदा विज्ञा ग्रामवृद्धा ग्रामस्थस्थविरा यस्या तादृशीं पूर्व प्रथममुद्दिष्टा वक्र: पन्था इत्यादिना कथिता श्रिया सम्पत्त्या शोभया वा विशालामतिशयिता विशाला विशालाभिधानाम् उज्जयनीं पुरीं त्वम् अनुसर गच्छ, श्रीविशालत्वमेव व्यक्तीकर्तुमुत्प्रेक्षते, स्वर्गिणा स्वर्गभुजा सुचरितस्य सुकृतस्य फले स्वर्गसुखादिके स्वल्पीभूते स्तोकावशिष्टे उपभोगात् क्षयिणि सति गा गताना यावता मुहूर्तेन स्वर्गे स्थीयते तावतोऽभावात् पृथ्वीं प्राप्ताना सतां शेषैर्भुक्तावशिष्टैः पुण्यैः सुकृतैर्हृतम् आनीत कान्तिमत् प्रशस्तशोभायुक्तम् एक श्रेष्ठम् उत्तमम् अद्वितीय वा दिवः स्वर्गस्य खण्डमिव । शकलमिव अवन्तीमिति "पान्छोनादि स्वाङ्गेन" इति ईप् । केचित्तु प्राप्यावन्तीनिति

पठित्वा अवन्तिशब्दो जनपदवचनः पुंलिङ्गः ततो द्वितीयाबहुवचनं, "मालवाः स्युरवन्तयः" इति **पुरुषोत्तम-कोष** इत्याहुः । केचित्तु अवन्तिशब्दः स्त्रीलिङ्ग एव देशवाची प्राप्यावन्तीरिति द्वितीयाबहुवचनान्त एव पाठ इत्याहुः । किन्तु प्राप्यावन्तीमित्येव ईबन्तावन्तीशब्दस्य द्वितीयैकवचनान्तस्य पाठो बहुप्राचीनपुस्तकेषु दृष्टत्वाद्बहुसम्मतः । अवन्तिशब्दः स्त्रीलिङ्गः पुरीविशेषेऽपि प्रसिद्ध एव । तथाच,

> "अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।
> पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः" ॥ इति ।

उदयनेति उज्जयनीपरिज्ञानमिदं, तादृशरम्यकथां श्रोष्यसीति चाशयः । **केचित्तु** उदयनकथाकोविदग्रामवृद्धामिति अवन्तीजनपदविशेषणम्, ग्रामपदेन प्रतिग्राममुदयनकथा ध्वन्यते इत्याहुः ।

उदयनकथा चैतादृशी; उज्जयन्यां किल प्रद्योतो नाम राजासीत् । तेन स्वसुता वासवदत्ता नाम सञ्जयाय राज्ञे विवाहेन दातुमनुमता । अत्रान्तरे सा स्वप्ने उदयनं वत्सराजं कौशाम्बीपतिं चकमे । ततस्तया स्वयमेव लोकद्वारा स्वानुरागवार्ता तस्मै ज्ञापिता । तत उदयन आगत्य तां हृत्वा नीतवान् । ततः स्वपुर्यामुज्जयन्याञ्च बहु विजहारेति । पूर्वोद्दिष्टामित्यनेनं विशालाख्या काचित् अन्यपुरीति शङ्का निरस्ता । श्रीविशालामित्यत्र श्रीर्विशाला महती यत्रेति निगृह्णन्त्यन्ये । किन्त्वत्र बहुव्रीहौ विशेषणस्य परनिपातो यत्नसाध्यः । विशालेत्युज्जयन्या नाम, तथा चोक्तंतन्त्र "विशालोज्जयनी प्रोक्ता पुरी चम्पा च मालिनी' ति । "विशालं वृहदाख्यातं विशालोज्जयनी पुरी"ति धरणिः । **केचित्तु** विशालां विस्तीर्णाम्, उज्जयनी तु पूर्वोद्दिष्टाशब्देनावगन्तव्येत्याहुः । दिवः खण्डमिवेत्युत्प्रेक्षैवेयम् । केचित्तु हृतं स्वर्गैकदेशमिवेत्यभूतोपमामाहुः, तत्र पुरीं दिवः खण्डमिवेति लिङ्गभेदेन गोपमादोषो रसावहत्वात् । तथा च **दण्डी**

> "न लिङ्गवचने भिन्ने न हीनाधिकतापि वा ।
> उपमादूषणायालं यत्रोद्वेगो न धीमताम्"इति ॥
> "केवलश्रेष्ठयोरेकमितरस्मिन्नपि त्रिष्वि"ति **सर्वः** । ३२॥

> **दीर्घीकुर्वन् पटु मदकलं कूजितं सारसानां**
> **प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ।**
> **तत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः**
> **सिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥ ३३ ॥**

ततः सिप्रानदीचिह्नेन उज्जयनीं प्राप्स्यसि तत्र च तथाविधसिप्रावातेन क्लमापनोदं प्राप्स्यसीति ध्वनयन्नाह । दीर्घी । तत्र उज्जयन्यां प्रत्यूषेषु प्रतिप्रभातं सिप्रावातः सिप्रानदीसम्बन्धी वायुः प्रार्थनया चाटुकारः प्रियकथनशीलः सन् प्रियकरणशीलः सन् वा प्रियतम इव भर्तेव स्त्रीणां सुरतग्लानिं रतिखेदं हरति अपनयति शैत्यादिगुणयोगात्, प्रियोऽप्युरुमवाहनादिना रतावसाने खेदमपनयतीत्युत्प्रेक्षितम् । चाटुकारतां दर्शयितुमाह, कीदृशः ? सारसानां पक्षिविशेषाणां पटु स्पष्टं मदेन मत्तया कलमव्यक्तमधुरं पटुना मदेन कलं वा कूजितं रुतं दीर्घीकुर्वन् दूरं नयन् सारसरुतेन प्रार्थयते इत्यर्थः; प्रियतमोऽपि सारसादिरुतमातनोति; यदुक्तं, "हारीत-पारावतसारसानां रुतं विदध्यात् कलकूजितादी"ति । करोतिरनातुकरणमिति । किं वा सह आरवेन सम्यक् रसेन वर्तन्ते इति सारसाः स्त्रियः, तासां कण्ठकूजितं प्रतिकूजितेन दीर्घीकुर्वन्, मिथुनस्यैव सारसादिरुतप्रतीतोत्वात् । पुनः कीदृशः ? स्फुटितं विकसितं यत् कमलं पद्मं तस्य य आमोदोऽतिनिर्हारी गन्धस्तेन सह या मैत्री अन्योन्यानुकूल्यभावोऽति-

सम्पर्कस्तेन कषाय. सुरभिः शोभनो वा,"सुगन्धौ च विमिश्रे च शोभने च कषायवागि" ति शार्वः, प्रियतमोऽपि विकचपद्मामोदसम्पर्केण कषायः पद्मवत् सुगन्ध इत्यर्थः, सत्पुरुषलक्षणमिद, तथा च सामुद्रके "स हि स्वभावाच् शुभपुष्पगन्ध" इति । किंवा स्फुटिता प्रव्यक्तीभूता कमला सम्पत्तिर्यस्य तादृशस्य आमोदस्य गन्धद्रव्यस्य मैत्र्या सम्पर्केण कषायः सुगन्धिर्लोहितवर्णो वा,

"कषायो रसभेदे स्यादङ्गरागे विलेपने।
निर्यासे च कषायोऽस्त्री सुरभौ लोहितेऽन्यवदि"ति ॥ विश्वः ।

किंवा स्फुटितकमलः प्रव्यक्तलक्ष्मीकः सानन्दत्वादामोदमैत्रीकषायश्च निर्हारि विलेपनादि-गन्धसम्पर्कात् सुरभिश्च, कर्मधारयः । पुनः कीदृशः ? अङ्गेषु अनुकूलो हितकारी मन्दगतित्वात्, प्रियोऽप्यूरुसंवाहनादिना अङ्गानुकूलः । प्रार्थनाचाटुकार इति प्रियतमस्यापि विशेषणम् ।

अन्ये तु प्रार्थनाचाटुकार इति प्रियतमस्य विशेषणम्,दीर्घीकुर्वन्नित्यादि तु वातस्य विशेषणमित्याहुः । यत्र स्त्रीणामिति पाठे यत्र उज्जयन्या, तामनुसरेति पूर्वश्लोकेन सम्बन्ध. । "अत्र स्त्रीणा"मिति क्वचित् पाठः । अत्र वातस्याङ्गानुकूलत्वाद् मान्द्यं बोध्यम्, शैत्य सौगन्ध्यन्च व्यक्तमेव । श्लेषवाक्यार्थोपमासङ्कीर्णमिदम् ॥३३॥

जालोद्गीर्णैरुपचितवपुः केशसंस्कारधूपै-
र्बन्धुप्रीत्या भवनशिखिभिर्दत्तनृत्योपहारः ।
हर्म्येष्वस्याः कुसुमसुरभिष्वध्वखिन्नान्तरात्मा ।
त्यक्त्वा खेदं ललितवनितापादरागाङ्कितेषु ॥३४॥

अधुना सौधोत्सङ्गप्रणयविमुखो मा च भूरुज्जयन्या इति विभावयन् देहोपचयादिना श्रममपनीय महाकाल-देवकुलं गमिष्यसीति युग्मकेन दर्शयन्नाह । जालो । त्वम् अध्वनि पथि खिन्न आयासितोऽन्तरात्मा सुखादि-गुणाधारो यस्य तादृशः सन्, अस्या उज्जयन्या हर्म्येषु रमणीयगृहेषु खेदम् आयासं त्यक्त्वा मुक्त्वा जालोद्गीर्णैः गवाक्षमुखनि.सृतैः केशाना चिकुराणा संस्काराय गुणान्तराधानायागुरुचन्दनाना धूपैरुपचितवपुर्मेघस्य धूमयोनित्वात्, वर्धितशरीर. सन् चण्डेश्वरस्य प्रचण्डस्य ईश्वरस्य महाकालमूर्तेर्महादेवस्य धाम आयतनं यायाः गमिष्यसीति वक्ष्यमाणेन सम्बन्ध । त्व कीदृश ? भवनशिखिभिर्गृहवासिकोटामयूरैर्बन्धुप्रीत्या सुहृदयमस्माकमागत इति स्नेहेन दत्तो नृत्यमेव नर्तनमेव उपहार उपढौकनं यस्मै तादृश., एतेन त्वद्दर्शनाद् विस्मृतश्रमत्वमुक्तम् आतिथ्य वा ध्वनितम् । हर्म्येषु कीदृशेषु ? कुसुमैः सुरभिषु सुगन्धिषु वातायननिसृतपुष्पसौरभवासितेषु इत्यर्थः, विदग्धाना हि क्रीडागृहं प्रकीर्णपुष्पप्रकरं भवति, तथा च

वेश्मोज्ज्वल सुमसृष्ट प्रकीर्णकुसुमोत्करम् ।
क्रीडोपकरणैर्युक्त पिण्डधूपमनोहरमि"ति ॥

परिभुक्तपुष्पं गृहोपरि क्षिप्यते तयोगादित्यन्ये, एतेन रम्यत्व सूचितम् । तथा ललिताना ललितवतीना [वनितानां] स्त्रीणां स्त्रीविशेषाणां वा पादरागेण चरणालक्तकेनाङ्कितेषु चिह्नितेषु, एतेन त्वयि तत्र स्थिते त्वदुपरि तासा ललितभ्रमणात् पादमर्दनेन क्लमहानिर्भविते'ति सूचितम् ।

तदुक्त,—"व्ययामाभ्यस्तगात्रस्य पद्भ्यामुद्वर्तितस्य च ।
व्याधयो नोपसर्पन्ति वैनतेयमिवोरगा" इति ॥

किंवा, स्थानस्य रम्यत्वात् ललिताङ्गनापुरुषायितादिदर्शनाच्च प्रीत्या श्रमहानि । अन्ये तु ललितैत्यादिना नायिकानां विपरीतरतप्रागल्भ्यमुक्तम्, एवं हि चरणलाक्षालक्षितत्वं भवनानामुपपद्यते इत्याहुः । ललितं विद्यते अस्या ललिता अर्शआदित्वादच् । ललितलक्षणं यथा,—

"तुलाकोटिस्वनैर्मार्गे सूचितं हंसलीलया ।
खेदादल्पसञ्चारं चलितं ललितं मतम्" ॥ इति ।

अन्यच्च—"हस्तपादादिविन्यासभ्रूनेत्रौष्ठप्रयोजितम् ।
सुकुमारविधानेन ललितं परिकीर्त्तितम्" ॥ इति ।

"वनिता जनितात्यर्थानुरागायाञ्च योषिति" त्यमरः । एतेन धूपोपचितगात्रत्वादिना उज्जयन्या रतिगम्यत्या प्रकर्षं सूचितं । ननु धूमादिसन्निपातो मेघ इत्यौत्सुक्यात्, यक्षो नाविगतवान् तत् कथं धूमेनोपचय उक्तः ? सत्यं, मेघाऽगुरुधूपाऽपि कृष्णं, अतो मिश्रितत्वादुपचिताकृति प्रतिभाति, किंवा विरुद्धत्वाद् यक्षस्य पूर्वापरविरोध । केचित्तु आह्लादकधूपैः श्रमविनयनादुपचितवपु स्फीतमूर्तिरिति व्याचक्षते ॥३४॥

**भर्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः**
**पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डेश्वरस्य ।**
**धूतोद्यानं कुवलयरजोगन्धिभिर्गन्धवत्या-**
**स्तोयक्रीडानिरतयुवतिस्नानतिक्तैर्मरुद्भिः ॥ ३५ ॥**

भर्त्तुं ॥ त्वं पुनः कीदृशः ? भर्त्तुः स्वामिनो महादेवस्य कण्ठस्येव छविः शोभा यस्य तादृश इति हेतोरयमस्मत्स्वामिगलसमानवर्ण इति स्मात् सादरं सानुरागं यथा स्यात् तथा गणैः प्रमथैर्नन्दिभृङ्ग्यादिभिर्वीक्ष्यमाणः दृश्यमानः, एतेन चण्डेश्वरस्य धामगमने तदनुचराद्भयं नास्ति सुखेन तत्र यास्यसीत्याकूतम्, आतिथ्यप्राप्तिर्वा ध्वनिता । कीदृशस्य चण्डेश्वरस्य ? त्रिभुवनस्य जगत्त्रयस्य गुरोः सृष्टिस्थितिसंहारहेतुत्वात् पूज्यस्य पितुर्वा, एतनावश्यं स साक्षात्करणीय अन्यथा श्रेयःप्रतिबन्धः स्यात् । उक्तं हि,

"प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः" इति ।

*कीदृशं धाम ? पुण्यं धर्महेतुं पापहन्तृ किंवा मनोज्ञम् । तथा गन्धवत्या गन्धवतीनाम्न्या नद्या मरुद्भिर्वातैः* धूतोद्यानं कम्पितारामम् धामचिह्नध्वनिरयम् । वातैः कीदृशैः ? कुवलयरजोगन्धिभिर्नीलोत्पलपरागसौरभयुक्तैः, तथा तोयक्रीडायां जलविहारे अविरतानाम् अत्यासक्तानां युवतीनां तरुणीनां स्नानेन स्नानीयेन सुगन्धिद्रव्येण तिक्तैः सुगन्धिभिः, उत्पलयोगेन युवतिस्नानेन च वायोः सौगन्ध्यम् । गन्धवतीति नदीनाम च सार्थकमिति ध्वनितम् । धूतोद्यानत्वेन वायोर्मान्द्यं सूचितम्, शैत्यं व्यक्तमेव । उद्यानस्थं त्वामेतादृशो मारुतः प्रीणयिष्यति गन्धवतीपयश्च पास्यसि युवतिजलक्रीडाश्च द्रक्ष्यसीत्याकूतम् । धाम्नः पुण्यतया उद्यानस्य रम्यतया धर्मकामौ तव सम्पत्स्येते इति ध्वनितमिति च वदन्ति । उदारप्राणान्वितोपमागर्भा जातिरियम् । तथाच "श्लाघ्यै-र्विशेषणैर्युक्तमुदारं कैश्चिदिष्यते" इति । इह प्रसादमाधुर्य—प्राणत्वेन बोध्ये, तथाच—

"प्रसादवत् प्रसिद्धार्थमिन्दोरिन्दीवरद्युति ।
लक्ष्म लक्ष्मीं तनोतीति प्रतीतिसुभगं वचः ॥
मधुरं रसवद्वाचि वस्तुन्यपि रसस्थिति ।
येन माद्यन्ति धीमन्तो मधुनेव मधुव्रता" इति ॥ युग्मकम् ॥३५॥

अप्यन्यस्मिञ्जलधर महाकालमासाद्य काले
स्थातव्यं ते नयनविषयं यावदभ्येति भानुः ।
कुर्वन् सन्ध्याबलिपटहतां शूलिनः श्लाघनीया-
मामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम् ॥३६॥

इतिकर्तव्यतामुपदिशन् धर्मसम्पत्त्या प्रोत्साहयन्नाह । अप्य । हे जलधर मेघ, अन्यस्मिन्नपि सन्ध्यासमयादितरस्मिन्नपि मध्याह्नादौ कालेऽपि सन्ध्याकाले यदि न गच्छसि तदा कालान्तरेऽपि महाकालं कालाग्निरुद्रम् आसाद्य प्राप्य सन्निधीकृत्य ते तव स्थातव्यं त्वया अवस्थेयम्, यावत् भानुः सूर्यो नयनविषयं चक्षुर्गोचरम् अभ्येति अभिगच्छति सन्ध्या यावद्भवतीत्यर्थः । अवस्थितौ हेतुमाह श्लाघनीयां प्रशस्यां शूलिनो महाकालायतने महादेवस्य सन्ध्याबलिपटहतां सायंसमयपूजावाद्यभेदभावं कुर्वन् अर्थात् गर्जितैः सम्पादयन् आमन्द्राणाम् ईषद्गम्भीराणां गर्जितानां ध्वनीनाम् अविकलं सम्पूर्णं फलं प्रयोजनं त्वं लप्स्यसे प्राप्स्यसि । अप्यन्यस्मिन्निति मत्कार्यार्थगमनकालादन्यस्मिन्नपि काले कामचाराद् यदा यदा तत्प्रदेशं यास्यसि तदा तदेत्यन्ये व्याचक्षते । केचित्तु अन्यस्मिन्नपि सन्ध्याव्यतिरिक्तकालेऽपि भानुर्यावत् नयनविषयम् अभ्येति यावत् सूर्योदयो भवतीत्यर्थः । सन्ध्याबलीत्यत्र सन्ध्याशब्देन प्रातःसन्ध्योच्यते प्रातःकाले हि देवालये पटहो वाद्यते, तत्र त्वमेव आमन्द्रपटहो भवेत्यर्थः, इति व्याचक्षते । जलधरेत्युचितपदोपादानं सजलमेघस्य गर्जितानामामन्द्रत्वात् । अभ्येतीत्यत्र अत्येतीति च पाठः । ननु कुर्वन्निति वर्तमानप्रयोगो भविष्यति काले कथम्, फललाभस्य प्राक्तनत्वेन वर्तमानसामीप्यस्य वर्तमानवत्त्वात्, धातुसम्बन्धे प्रत्यया इत्युक्तेर्वा । अन्ये तु कुर्वन्निति भविष्यति वर्तमानप्रयोगः साध्याया अपि सन्ध्याबलिपटहताया सिद्धवद्व्यपदेशात् सिद्धभावनानामालङ्कारप्रतिपादनार्थं । यदुक्तम्,

"साध्यस्य सिद्धवद्व्याजो (?) अतद्भावेन कीर्तनम् ।
साध्यभेदप्रसिद्ध्यर्थं यत्र सा सिद्धभावने'ति ॥

साध्यभेदस्थानं फलं लप्स्यसे इतीत्याहुः । "बलिः पूजोपहारे स्यात् करे चामरदण्डयो'रिति धरणिः । पटहशब्देनात्र कार्यकारणयोरभेदोपचारात् तत्कृतो ध्वनिरुच्यते, किंवा पटहतां पटहभावमेव कुर्वन् तत्तुल्यध्वनिकरणादित्याक्षेपात् । "आनकः पटहोऽस्त्री स्यादि'त्यमरः । केचित्तु सन्ध्याबलिपटहतां वृषोत्सर्गवाद्यम्, तथा चोत्तरतन्त्रे, "ये शिवायतनोत्सृष्टास्ते सन्ध्याबलयो वृषा' इतीति व्याचक्षते, किन्त्वत्र नयनविषयं यावदभ्येति भानुरिति व्यर्थं स्यात् वृषोत्सर्गवाद्ये कालनियमाभावात् । सन्ध्यासमयेऽङ्कितो वृषः सन्ध्याबलिरित्यत्र तु प्रमाणं नास्ति, अप्रस्तुतश्चेदम् ॥३६॥

पादन्यासैः क्वणितरशनास्तत्र लीलावधूतै
रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः ।
वेश्यास्त्वत्तो नखपदसुखान् प्राप्य वर्षाग्रबिन्दू-
नामोक्ष्यन्ति त्वयि मधुकरश्रेणिदीर्घान् कटाक्षान् ॥३७॥

सुरसम्पत्त्या प्रोत्साहयितुमाह । पाद इति । तत्र महाकालायतने वेश्या वशं शासमाना स्त्रियो गणिका वा त्वत्तो भवतः सकाशात् वर्षाग्रबिन्दून् वृष्टिप्रथमजलकणान् प्राप्य त्वयि कटाक्षान् लोचनान्तविलोकितानि आमोक्ष्यन्ति त्यक्ष्यन्ति । तासां रम्यतामाह कीदृश्यो वेश्याः, पादन्यासैः देवप्रदक्षिणाकरणार्थं चरणक्षेपैः क्वणिता शब्दिता रशना क्षुद्रघण्टिका यासां तास्तथा, तथा चामरैर्व्यजनैः क्लान्तः खिन्नो हस्तो यासां तास्तथा, सौकुमार्य

ध्वनिरयम्। कीदृशैः ? लीलया विलसेन उत्क्षेपणक्रमविशेषेण अवधूतैश्चालितैः, तथा रत्नानां पद्मरागादीनां मणीनां वेण्यां परिहितानां चामरदण्डोपन्तारोपिणां वा छायाभिः कान्तिभिः खचितो मिश्रितः कर्बुरितो वलिर्दण्डो येषां तादृशैः, "वलिश्चामरदण्डेऽपी"ति रन्तिः। वर्षाग्रबिन्दून् कीदृशान् नखपदानां नखक्षतानां सुखान् सुखकारिणः नखपदानि पाकोन्मुखत्वात् सन्तापयन्ति तत्र वर्षाग्रबिन्दवः सुखहेतवः अत एव तल्लाभेन सुखोत्पत्त्या कटाक्षान् करिष्यन्तीति भावः। ध्वनिना तु नखपदवत् सुखानिति कामुकभ्रमात् कटाक्षान् करिष्यन्तीत्यप्युक्तम्। कटाक्षान् कीदृशान्, मधुकरश्रेणिवत् भ्रमरपङ्क्तिवत् दीर्घान् आयतान् अपाङ्गगतत्वात्, उत्फुल्ला नामेयं दृष्टिः, यदाह,—

"विस्तीर्णमाणनयनस्फुरतापाङ्गविमर्षिणी।
उत्फुल्ला नामतो दृष्टिर्महोत्सवे विधीयते" ॥ इति।

अत्र वेश्यादीनां विशिष्टगौरवाख्यापनेन वेश्यानां चामरदोलाचोर्ध्वं प्रतिपादितं, तथा च दण्डी,

"उत्कर्षवान् गुणः कश्चिदुक्ते यस्मिन् प्रतीयते।
तदुदाराह्वयस्तेन सनाथा काव्यपद्धति' रिति॥

अत्र पादन्यासेत्यनेन वेश्यानां नृत्यविशेषो ध्वनितः। उक्तञ्च, - "नृत्येषु चरणक्षेपः पादन्यासः प्रकीर्तित" इति। पूजाकाले चामरमादाय नृत्यन्त्यो वेश्यास्तत्रायतने भ्रमन्तीत्यर्थ इति च व्याचक्षते। एवमिह व्याख्यान्तरं ग्रन्थगौरवभयात् उपेक्षितम्॥ ३७॥

पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः
सायं तेजः प्रतिनवजपापुष्परक्तं दधानः।
नृत्यारम्भे हर पशुपतेरार्द्रनागाजिनेच्छां
शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या ॥३८॥

तत्र पुण्यप्राप्त्यर्थमुपदिशन् पार्वतीप्रीत्या धर्मसम्पत्त्या प्रोत्साहयितुमाह। पश्चा। त्वं मण्डलेन आत्मप्रतिबिम्बेन वलयाकारेण पश्चात् पृष्ठदेशे भ्रमणानन्तरं वा उच्चैर्भुजा उच्छ्रितबाहव एव उच्छ्रितत्वात् तरवो दृशास्तेषां वनं समूहम् अभिलीनः समाश्लिष्टः सन्, सायं सन्ध्याकालसम्बन्धि अत एव प्रतिनवम् अभिनवम् अम्लानं यज्जपापुष्पम् ओड्रकुसुमं तद्वद् रक्तं लोहितं तेजो द्युतिं दधानो धारयन् शान्तेन दूरीकृतेन उद्वेगेन मनोविकारविशेषेण स्तिमितनयनं स्थिरानिश्चलश्लोचनं यथा स्यात् तथा भवान्या दुर्गया दृष्टा अवलोकिता भक्तिः सेवा यस्य तादृशः सन् नृत्यस्य नर्तनस्य आरम्भे उपक्रमे पशुपतेश्चण्डेश्वरस्य आर्द्रनागाजिनेच्छां सरक्तगजचर्मधारणाभिलाषं हर अपनेष्यसि। अयमाशयः, महादेवः सायं रक्तगजचर्म परधार्यो समुत्क्षिप्य सन्ध्यायां ताण्डवमारभते। तत्र भवानी भीभयत्वात् सोद्वेगा भवति। तत्र त्वयि तत्क्रियाकारिणि सति नागाजिनेच्छागमने भीभयाभावात् प्रीता सती तव तादृशमूर्त्यदर्शनेन विस्मयस्तिमितनेत्रा भवती त्वां प्रेक्षिष्यते इति। एतेनोभयोरेवाराधनेन धर्मः सूचितः। भुजतरुवनमिति शिरस्य दशभुजत्वादुक्तम्। यदुक्तं,

मत्त-मगाम्यमुक्तम् जवाशब्देनात ओड्रूप उच्यते, अत एव जवापुष्पमिति न पुनरुक्तम्, "ओड्रपुष्पेऽपि जवाऽपि जवाशब्द प्रकीर्तित' इति पुरुषोत्तम, नवविनिद्रजवाकुसुमत्विषामि ति भारवि, "जवाकुसुमसङ्काशमि ति सूर्यस्तव । आर्द्रत्वेनेनाचिरत्व सशोणितना सूचिता । शान्तेति क्रियाविशेषणेन विस्मिता दृष्टि सूचिता, तथाच —

' किञ्चिदुद्धृतनेत्रान्ता दृष्टोद्भ्रन्भ्रमाञ्चला ।
स्फीता विकसिता दृष्टिर्विस्मिता विस्मये रसे ' ॥ इति ।

शान्तोद्वेगेति मेघसम्बोधन शान्त उपशमित उद्वेगो येनेति केचित् । ' स्तिमितो निश्चले क्लिन्ने ' इति धरणि । स्तिमितेति स्तमितयोऽपीष्यन्ते इति पु वद्भावनिषेधस्य प्रायिकत्वात् ॥३८ ॥

गच्छन्तीना रमणवसति योषिता तत्र नक्त
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभि ।
सौदामन्या कनकनिकषस्निग्धया दर्शयोर्वी
तोयोत्सर्गस्तनितमुखरो मास्म भूर्विक्लवास्ता ॥३९ ॥

अभिसारिकाणामुपकारद्वय प्रार्थयन् तासां दर्शनात् प्रेत्साहयन्नाह । गच्छ । तत्र नक्त तस्या रात्री तत्रोच यन्या वा नरपतिपथे राजवर्त्मनि सूचिभेद्यैर्निविडैस्तमोभिरन्धकारै रुद्धालोके आवृतचाक्षुषज्ञाने आच्छादितदर्शने सति त्व कनकनिकषवत् स्वर्णरेखावत् स्निग्धया मनोहरया सौदामन्या विद्युता रमणस्य वल्लभस्य वसतिं वेश्म रमणाय रत्यै वा वसतिं गच्छन्तीना यान्तीना योषिता स्त्राणाम् अभिसारिकाणाम् उर्वी भूमिं दर्शय दृष्टिविषयतां प्रापय, एव तोयोत्सर्गे जलत्यागे यत् स्तनित गर्जित तेन मुखरो वाचाल सशब्दो मा च भूर्नैव भविष्यसि, ध्वनिना तु तोयोत्सर्गेण स्तनितेन च मुखरो दुर्जनो मा च भू च शब्द एवार्थे । कुत इत्याह यतस्ता विक्लवा कामव्यग्रा गर्जितामहा इति स्तनित मा कार्षीरित्यर्थ । किंवा त्वद्गर्जने ता विह्वला स्युरित्यर्थात्, किंवा त्व मुखरो मा भू, ताश्च विक्लवा मा भूवन् । च शब्द समुच्चय । वर्त्मदर्शनेन विद्युद्द्योतया अमुखरत्वेन च ता उपकरिष्यसीत्यर्थ । सूचिभेद्यैरिति सूचि कर्मकारकद्वयभेद तया भिद्यन्ते इति घ्यण सूचिभेदमर्हतीति ण्यो वा सूचिभेद्यत्वञ्च कवि समयस्तमोनिविडतया ननु वस्तुतस्तमसा सूचिभेद्यता । कनकनिकषस्निग्धयेत्यनेन विद्युतोऽस्खल ध्वनितम्, महती हि विद्युदभिसारिकाणा भयहेतु । कनकनिकषच्छाययेति पाठे कनकनिकषवत् छाया कान्तिर्यस्यास्तादृश्या । ' मुखरो बहुवाक प्रोक्तो मुखरो दुर्जने मत इति रन्ति ॥ ३९ ॥

ता कस्याञ्चिद्भवनवलभौ सुप्तपारावताया
नीत्वा रात्रिं चिरविलसनात् खिन्नविद्युत्कलत्र ।
दृष्टे सूर्ये पुनरपि भवान् वाहयेदध्वशेष
मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्या ॥ ४० ॥

उज्जयिन्यां गमनागमनसमृद्ध्या विश्रामसमुत्प्रेक्षमाणो गमनाय त्वरयितुमाह । ता । सुप्ता निद्राणा पारावता यस्या तादृशां कस्याञ्चिद् भवनस्य सौधगृहस्य वलभौ उपरि मण्डलिकाया चौखण्डी इति चादनी इति च ख्यातायां चिरविलसनात् प्रभूतकालस्फुरणात् बहुचिरस्मरणात् खिन्न क्षीण बहुतरायासयुक्त विद्युदेव कलत्र यस्य तादृशो भवान् तां पूर्वमुक्तां रात्रिं नीत्वा गमयित्वा सूर्ये दृष्टे सति प्रभाते सति पुनरपि अध्वशेषं गन्तव्यवर्त्मनोऽवशिष्ट वाहयेत् गच्छतु । कुतस्तत्रावस्थान विहाय गिरेस्तत्र प्रातरेव गमिष्यामीत्यथान्तर न्यस्यति खलु यस्मात्

सुहृदां मित्राणाम् अभ्युपेता अङ्गीकृता अर्थस्य प्रयोजनस्य कृत्या करणं यैस्तादृशा जना न मन्दायन्ते न शिथिलीभवन्ति। कस्याञ्चिदिति अनिर्दिष्टविशेषत्वात् सर्वत्र वडभीनां सौलभ्यं सूचितम्। "सौधपृष्ठे विरचितां मण्डलीं वडभिं विदु"रित्युत्पलिनी, "सौधोपरि चतुःपार्श्वे मण्डलीं वडभीं विदु"रिति **कौमुदी**। "विख्याता वडभी चूडे" इत्यमरमाला, "वडभी चन्द्रशालेति ख्याता प्रासादमस्तके"इति **शर्वः**, सुप्तपारावतत्वेन निर्जनत्वाद्रतिरसोद्दीपनत्वं ध्वनितम्। वाहयेदिति स्वार्थे णिः; अम्बरोपमित्यनेन मद्गृहं निकटवर्तीति मेघस्य आदरागमनं सूचितम्। मन्दायन्ते इति भृशादित्वात् क्यङ्। खलु हेतौ निश्चये वा। अभ्युपेतार्थकृत्या इति यद्यपि विशेषणमपि विशेष्यप्रतिपत्तिकरमिति विशेष्यलाभः। **केचित्तु** हे अभ्युपेतार्थ अङ्गीकृतप्रयोजन, सुहृदां कृत्याः कर्तव्या अर्था न मन्दायन्ते। कृत्या इत्यर्थापेक्षया पुंस्त्वम्, अभ्युपेतार्थेत्यत्र अर्थशब्दस्य प्रकृतत्वात्, किंवा "कृत्या क्रिया-देवतयोरि"ति **कोष** इत्याहुः, फल्याख्येयम्॥ ४०॥

**तस्मिन् काले नयनसलिलं योषितां खण्डितानां**
**शान्तिं नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु।**
**प्रालेयास्रं कमलवदनात् सोऽपि हर्तुं नलिन्याः**
**प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः॥४१॥**

यदि प्रातर्न गच्छसि तदा त्वं खण्डितामन्युभरतः स्याः, सूर्योऽपि साभ्यसूयस्त्वां दहेदिति व्यतिरेकेण दोषं दर्शयन्नाह। तस्मिन्। तस्मिन् काले प्रभाते प्रणयिभिः प्रियैः खण्डितानां प्रियवञ्चितानां योषितां स्त्रीणां नयनसलिलं रोदनजलं शान्तिम् उपशमं नेयं प्रापणीयम्, अतः कारणात् त्वं भानोः सूर्यस्य वर्त्म पन्थानम् आशु शीघ्रं त्यज परिहरिष्यसि सूर्याश्रको मा भूरित्यर्थः, यदि सूर्यमावृत्य तिष्ठसि तदा प्रभातप्रतीक्ष्या प्रणयिनामनागमनं स्यात् खण्डितानां दुःखशान्तिर्न स्यादिति तन्मन्युस्त्वयि स्यादिति भावः। दोषान्तरमाह, सोऽपि भानुरपि नलिन्याः पद्मिन्याः कमलवदनात् पद्मरूपमुखात् प्रालेयास्रं हिमरूपमश्रु हर्तुम् अपनेतुं प्रत्यावृत्तः प्रत्यागतः त्वयि कररुधि रश्मिरोधके सति अनल्पाभ्यसूयोऽतिक्रोधः स्यात् नयनस्य वदनत्वेन हिमस्य चाश्रुत्वेन रूपणात् पद्मिन्याः खण्डितत्वं रवेर्नायकत्वं ध्वनितम्। कररुधीत्यत्र ध्वनिना करो हस्तो वाच्यः, यस्येष्टसाधनाय प्रसारितं हस्तं यो रुणद्धि स तं प्रति अनल्पाभ्यसूयः स्यादिति युक्तमेव। नयनसलिलमत्र ईर्ष्यासम्भव; यदाह "आनन्दार्तिसमुद्भूतमश्रु विद्याद् द्विधैव ही"ति। खण्डितालक्षणमाह **भरतः**।

"निद्राकषायमुकुलीकृतनेत्रयुग्मो नारीनखव्रणविशेषविचित्रिताङ्गः।
यस्याः कुतोऽपि गृहमेति पतिः प्रभाते सा खण्डितेति कथिता कविभिः पुराणै"रिति॥
अन्योऽप्याह—"अन्यत्र सकलां रात्रिं नीत्वा यस्याः सुहृज्जनः।
प्रातरायाति सा ज्ञेया खण्डिता नाम नायिके"ति॥४१॥

**गम्भीरायाः पयसि सरितश्चेतसीव प्रसन्ने**
**छायात्मापि प्रकृतिसुभगो लप्स्यते ते प्रवेशम्।**
**तस्मादस्याः कुमुदविशदान्यर्हसि त्वं न धैर्यान्-**
**मोघीकर्तुं चटुलशफरोद्वर्तनप्रेक्षितानि॥ ४२॥**

उज्जयनीतश्चलितस्त्वं गम्भीराया नद्याः पयः पास्यसीति प्रतिपादयन् तदीयजलसम्भवया प्रेमोत्पादयितुमाह। गम्भीरायाः। गम्भीराया गम्भीरानाम्न्याः सरितो नद्याः अथच गम्भीराया गूढरोपतोषस्त्रीविशेषस्य प्रसन्ने निर्मले पक्षे

सानुरागे चेतसीव पयसि पानीये ते तव प्रकृतिसुभगः स्वभावमनोहरः छायात्मापि प्रतिबिम्बशरीरमपि प्रवेशम् आसन्नं लप्स्यते प्राप्स्यति । प्रसन्न इत्यनेन प्रवेशयोग्यत्वं सूचितम्, छायात्मापीत्यपिशब्दान्मनोऽपि, छाया प्रतिबिम्बम् आत्मापि स्वरूपमपीति वा, आत्मा बुद्धिर्मनोऽपीति वा। चेतसीवेति इवशब्दात् ते नायकस्येवेति च बोद्धव्यम्। यथा कस्यचित् नायकस्य चित्रनिर्मितप्रतिबिम्बमपि रक्तानुरक्तयाः कामिन्या हृदि प्रविशति तद्वदित्यर्थः। तस्मात् कारणात् त्वं धैर्यात् धीरत्वात् हेतोः धैर्यमवलम्ब्य वा अस्या नदीनायिकायाः कुमुदविशदानि कैरववत् शुभ्राणि चटुलानि चञ्चलानि मनोज्ञानि वा सफराणां प्रोष्ठीमत्स्यानाम् उद्वर्तनान्येव उद्धतपरिवर्तनान्येव अथच तद्वत् प्रेक्षितानि कटाक्षनिक्षेपान् मोघीकर्तुं व्यर्थीकर्तुं नार्हसि न योग्यो भवसि, धैर्यं न कार्यं तान्यनुभविष्यसि स्वच्छन्दं विहरिष्यसीत्यर्थः । मेघच्छायां प्राप्य सफर्य उद्वर्तन्ते इति प्रसिद्धम् । धैर्यलक्षणं यथा,—

"चापलेन न संस्पृष्टा सर्वार्थेष्वविकत्थना ।
स्वाभाविकी मनोवृत्तिर्धैर्यमित्यभिधीयते" ॥ इति ।

*धैर्यादाशयज्ञानपाण्डित्यान्न मोघीकर्तुमर्हसीति वा । इयमाविष्कृतानुरागात् क्षिप्रगम्यैव भवति । यदुक्तं,—*

*"आकारेणात्मनो भावं या नारी प्राक् प्रकाशयेत् ।*
क्षिप्रमेवाभियोज्या सा प्रथमे चापि दर्शने" ॥ इति ।

अन्यच्च, "प्रियं कामयमानायाः कर्तव्या हस्तधारणे"ति ॥

इयञ्च कान्ता दृक्, यदाह,

"व्याकोपमध्या चटुला मधुरा स्निग्धतारका ।
दृष्टिः कान्तेति कथिता रतिभावसमाश्रिते"ति ॥

कुमुदविशदानीति—उपान्तधावल्यपरमेतत्, पूर्वसजातविरहेण कज्जलायोगादित्यन्ये । गम्भीरालक्षणं यथा, "गम्भीरा धैर्यतो वामा सदृशी रोषतोषयो"रिति । अन्यच्च,—

विक्रिया सहजा यत्र हर्षोत्कर्षभयादिषु ।
भावेषु नोपलभ्यन्ते तद् गाम्भीर्यमुदाहृतम्"॥ इति ।

इह गम्भीरा मानिनी, तथाहि छायात्मा चित्रादिप्रतिमूर्तिं मानिन्या अनाविष्कृतप्रणयायाः कस्याश्चेतसि प्रसादं गते प्रतिमूर्तिरपि प्रविशति प्रीतिं दिशति, प्रियोऽपि आशयज्ञानपाण्डित्यात् तस्याः प्रेक्षितानि न मोघीकरोतीति । किंवा इयमुत्कण्ठिता नायिका; यदुक्तम्,

"विरहे जायते यस्या उत्कण्ठाकुलितं मनः ।
उत्कण्ठितेति सा नाम्ना विदग्धैरभिधीयते" ॥ इति ।

अस्या अपि व्यक्तानुरागे चित्ते प्रियप्रतिमूर्तिरपि प्रविशति, तादृशी धैर्यात् नोपेक्षणीया भवति ॥४२॥

**तस्याः किञ्चित् करधृतमिव प्राप्तवानीरशाखं**
**हृत्वा नीलं सलिलवसनं मुक्तरोधोनितम्बम् ।**
**प्रस्थानं ते कथमपि सखे लम्बमानस्य भावि**
**ज्ञातास्वादः पुलिनजघनां को विहातुं समर्थः ॥ ४३ ॥**

इदानीं तथाविधसुखप्राप्त्या विलम्बमवधार्य गमनाय त्वरयितुमाह । तस्या । हे सखे मित्र, ते तव प्रस्थानं गमनं कथमपि कष्टसृष्ट्या केवलं मदुपकारबुद्ध्या भावि भविष्यति, एतेनात्रीडस्तापाल्लस्यादेन गन्तव्य-

मिति सूचितम् । उक्तं हि, "अज्ञातरतं सुरतिनः परिपालयन्ती"ति । त्यक्ष्यसे इति प्रार्थनायां प्रियवाक्यम् । किमिति प्रार्थ्यत इत्याह, तत्र कीदृशस्य ? तस्या गम्भीराया नद्या नायिकाया इव सलिलं जलमेव वसनं वस्त्रम् अथच स्वच्छत्वात् सलिलवद्वसनं च हृत्वा गृहीत्वा अर्थात् पीत्वा अथच आकृष्य लम्बमानस्य आलम्बनं कुर्वतः नदी-मभितिष्ठतः स्पर्शादिसुखमनुभवत इत्यर्थः अथच विलम्बं कुर्वतः । अन्ये तु, पयः पीत्वा गुरुत्वात् लम्बमानस्य नभसोऽधःपतत इत्याहुः; किन्त्वेव ज्ञातास्वाद इत्याद्यप्रस्तुतं स्यात् । किम्भूतं सलिलवसनं प्राप्ता वानीरस्य वेतसस्य शाखा विटपो येन अथच प्राप्तो वानीर एव अथच तद्वत् शाखा भुजो येन तादृशम्, अत एव किञ्चित् करधृतमिव वानीरशाखायाः करोपमत्वात्; नायिका हि वस्त्रापहरणसमये इच्छावत्योऽपि हस्तेन वस्त्रं निरुन्धन्त्येव, ईषद्धस्त-निरुद्धमिव, तथा नीलं वानीरच्छायया कृष्णम् अथच नीलीरसरञ्जितत्वात् नीलं, तथा मुक्तरोधोनितम्बं मुक्तस्त्यक्तो रोध एव तीरमेव अथच तद्वत् नितम्बः कटीपश्चाद्भागो येन तादृशम्, जलचिह्नव्यतिरयम् । किमेतावतैव गमननिरोधः स्यादित्याह ज्ञातेति, ज्ञातोऽनुभूत आस्वादो जलसुरसतादीत्यर्थः येन तादृशः कः पुलिनमेव जघनं कटीपुरोभागो यस्यास्तां पुलिनजघनां नदीं विहातुं त्यक्तुं समर्थः शक्तो भवति अपि तु न कोऽपि; तादृशनदीसुगन्धसलिला-वगाहनावासकरुचिरं भवति । अथच ज्ञातास्वादोऽनुभूतशृङ्गाररसः पुलिनजघनां शीतलत्विशालत्वात् पुलिन-मिव जघनं यस्यास्तादृशीं स्त्रियं विहातुं समर्थः शक्तो जनस्तदुपभोगासक्तोऽन्यथीरितकार्यान्तरः स्यादित्यर्थः । अत एव मदनुरोधेनैव तव गमनं भविष्यतीति भावः । जघनस्य पुलिनोपमानेन शैत्यादिगुणवत्त्वसूचनात् वर-वर्णिनीत्वमुक्तम् । तथाच,

"शीते सुखोष्णसर्वाङ्गी ग्रीष्मे च सुखशीतला ।
भर्तृभक्तिरता नित्यं सा स्मृता वरवर्णिनी"ति ॥ केचित् ।

विपुलजघनामिति पाठे विपुलं विशालम् । श्लेषादस्याः स्वाधीनभर्तृकात्वमुक्तम्, तथाच,

यस्याश्चित्तरतिक्रीडासुखास्वादनलालसः ।
न प्रयाति प्रियः पार्श्वात् सा स्यात् स्वाधीनभर्तृके"ति ॥

केचित्तु नीलमित्यनेनाभिसारिकात्वं ध्वनितम्, अभिसारिका हि अन्धकारे नीलवसनं परिदधातीत्याहुः । "अथ वेतसे । रथाभ्रपुष्पविदुलशीतवानीरवञ्जुला" इत्यमरः । "वानीर इज्जल" इत्यमरः । "शाखा पक्षान्तरे भुजे" इति विश्वः । "समे शाखालते" इत्यमरः "कूलं रोधश्च तीरञ्चे"ति च । "यदन्तर्वारिणस्तटम्—। तोयो-त्थितं तत् पुलिन"मिति च । भावीति भविष्यति णिन् । रूपकोपमास्वभावाख्यानगर्भार्थान्तरन्यासः ॥४३॥

त्वन्निष्यन्दोच्छ्वसितवसुधागन्धसम्पर्कपुण्यः
स्रोतोरन्ध्रध्वनितसुभगं दन्तिभिः पीयमानः ।
नीचैर्वास्यत्युपजिगमिषोर्देवपूर्वं गिरिं ते
शीतो वायुः परिणमयिता काननोदुम्बराणाम् ॥ ४४ ॥

गम्भीरायाः पयः पीत्वा तुष्टो मन्दमन्दं देवगिरिं यास्यसीति दर्शयन्नाह । त्वन्नि । देवपूर्वं गिरिं देवगिरिं कार्तिकेयनिवासस्थानपर्वतम् उपजिगमिषोरुपगन्तुमिच्छोस्तव सम्बन्धे शीतः दत्तस्ततो विशीर्णनिष्यन्दशीतली-भूतो वातो नीचैर्मन्दं यथा स्यात् तथा वास्यति गमिष्यति । मन्दशीतलवातेन प्रीणितस्त्वमपि वातमान्द्याद् गम्भीरापय पूर्णोदरत्वाच मन्दं गमिष्यसीत्यर्थः । पूर्णोदरस्य शीघ्रगमने दोषदर्शनात् । तथाच,

"भुक्तोपविशतस्तुन्द शयानस्य वपुर्भवन् ।
आयुश्चङ्क्रममाणस्य मृत्युर्धावति धावत" ॥ इति ।

मेघवानस्य स्वभाववगना चेयम् । नीचैराजिगमिषारिति च योजयन्ति, तदा वातस्य मान्द्यमाक्षेपलभ्यम्। कीदृशो वायु ? तत्र निष्यन्देन क्षरणेन जलबिन्दुना उच्छ्वसिताया वाष्पायमाणाया वसुधाया पृथिव्या गन्धस्य सम्पर्केण सङ्गेन पुण्यो मनोहर "पुण्य पवित्रमित्याहुर्मनोज्ञ पुण्यमुच्यते" इति यल । एतेन सौगन्ध्य प्रतिपादितम्, अत एव स्रोतसा नासाया रन्ध्रस्य विवरस्य ध्वनिनेन शब्देन सुभग यथा स्यात्तथा दन्तिभिर्हस्तिभि पीयमान उप भुज्यमान, गजा हि मुखमुन्नमय्य वात पिबन्तीति प्रसिद्धम् एतेन हस्तिना प्रीणनात् परोपकारध्वनि । तथा काननोदुम्बराणा वनभवोदुम्बरतरुफलाना परिणमयिता परिपाचयिता पक्वता प्रापयिता, एतेन मान्द्य वर्त्मचिह्न रम्य त्वञ्च ध्वनितम् । केचित्तु उदुम्बरफलाना पाचयिता एतेन कठिनमपि फल मृदु करोतीत्यर्थ । तथा उदुम्बरवृक्षाणा परि सर्वतोभावेन नमयिता उन्नतमपि नम्रता नयतीत्यर्थश्च, एतेन एवम्भूतदर्शकत्वान्नीचैर्वास्यतीति व्याचक्षते । उदुम्बरो यज्ञडुमरि इति ख्यातो वृक्ष, "उदुम्बरे जन्तुफलो यज्ञाङ्गो हेमदुग्धक" इत्यमर. । अत्र उदुम्बर फल, "द्विहीन प्रपरे सर्व"मित्युक्ते, । उदुम्बरो डुमुरि इति ख्यातो वृक्ष इत्यन्ये । देवपूर्वमिति देव पूर्वो यस्मात् स देवपूर्वो गिरिर्देवगिरिरित्यर्थ । यथा "हिरण्यपूर्वं कशिपु प्रचक्षते" इत्यत्र हिरण्यकशिपुरिति ॥४४॥

तत्र स्कन्द नियतवसतिं पुष्पमेघीकृतात्मा
पुष्पासारैः स्नपयतु भवान् व्योमगङ्गाजलार्द्रैः ।
रक्षाहेतोर्नवशशिभृता वासवीना चमूना
मत्यादित्यं हुतवहमुखे सम्भृत तद्धि तेज ॥ ४५ ॥

देवगिरौ धर्मसम्पत्तिमुपदिशन्नाह । तत्र । तत्र देवगिरौ नियतवसतिं नित्यवासिन स्कन्द कार्त्तिकेय भवान् पुष्पमेघीकृत आत्मा शरीर येन कामरूपत्वात् तादृश सन् व्योमगङ्गाया मन्दाकिन्या जलेनार्द्रै स्तिमितै पुष्पाणामासारैरतिशयितवर्षैं स्नपयतु स्नान कारयिष्यति । स्कन्दस्यातिशयपूज्यत्व दर्शयितु तत्तेजस्विताधिक्यमाह, हि यस्मात् तत स्कन्दरूपम् अत्यादित्य सूर्यमतिक्रान्त सूर्यादपि तीव्र तेज नवशशिभृता चन्द्रधारिणा महादेवेन वासवीनाम् इन्द्रस्य वाहिनीना चमूना सेनाना रक्षाहेतो परित्राणनिमित्त हुतवहस्याग्नेर्मुखे सम्भृतम् अर्पित निक्षिप्तम्, अग्निमुखसम्भृतत्वेनाग्निरूप तेज इति जलवृष्ट्या वह्निशान्तिशङ्कया पुष्पासारै स्नपनमुक्त, न तु जलै, देवता च सपुष्पजलैनैव स्नप्यते इति किञ्चिज्जलयोगसूचनाय जलार्द्रैरित्युक्तम् । तत्रापि स्कन्दस्य गङ्गाप्रभवत्वात् तज्जलप्रीत्यतिशयात् गङ्गोल्लेख । पुष्पमेघीकृतात्मेत्यनेन प्रागुक्त कामरूपत्वमुपपादितम् ।

"प्राय कुन्देन्दुसदृशप्रसूनचयवर्षण ।
पयोवाहो भवेद् यस्तु पुष्पमेघ स उच्यते" ॥ इति बल ।

पुरा किल तारकोपप्लुतदेवगणरक्षार्थं शिवेनाग्निरूप स्वतेजमग्निमुखे क्षिप्त, तेनापि तद्धारणाक्षमत्वात् गङ्गाया क्षिप्त, सा च शरवणे कुमारमसूत, स च कृत्तिकादिभिर्लीला पालित इति पौराणिकी कथा । अत्र देवताविषयो रतिभावो व्यज्यते इति भावध्वनिस्तस्य हेत्वलङ्कारेण सङ्कर । अतिशयोक्तिरियमत्यादित्यमित्युक्ते । तथाच,

"विवक्षा या विशेषस्य लोकसीमातिवर्तिनी ।
असावतिशयोक्ति स्यादलङ्कारोत्तमा च सा" इत्यन्ये ॥
"वसति स्यादवस्थाने यामिन्याञ्च निकेतने" इति विश्व ॥४५॥

ज्योतिर्लेखावलयि गलितं यस्य बर्हं भवानी
पुत्रप्रेम्णा कुवलयदलप्रापि कर्णे करोति ।
धौतापाङ्गं हरशशिरुचा पावकेस्तं मयूरं
पश्चादद्रिग्रहणगुरुभिर्गर्जितैर्नर्तयेथाः ॥ ४६ ॥

प्रधानदेवतां सम्पूज्य तदीयवाहनादिकञ्च पूजयेत् इत्यागमदर्शनान्मयूरस्याप्यायनमुपदिशन् तदाप्यायनेन गौरीशङ्करस्कन्दानां प्रीत्या धर्मसम्पत्तिमाह । ज्योति । भवानी दुर्गा पुत्रप्रेम्णा मम पुत्रस्यायं मयूरस्तस्येदमिति स्नेहेन न त्वलङ्कारवाञ्छया यस्य मयूरस्य बर्हं पिच्छं कर्णे श्रवणे करोति निवेशयति तं मयूरं त्वं प्रथममाप्याययेः तर्पयिष्यसि स्वनिष्यन्दशीतलशीतेनेत्याक्षेपात् । पश्चादाप्यायनानन्तरं गर्जितैर्ध्वनिभिस्तं नर्तयेथाः नर्तयिष्यसि । ननु पुत्रप्रेम्णा चेद्धारयति तर्हि बर्हं न रम्यमित्याह, कीदृशं बर्हं ? ज्योतिर्लेखावलयि ज्योतिषां नानारूपाणाम् अर्धचन्द्राद्याकाराणां लेखा राजयस्तासां वलयं मण्डलं विद्यते यत्र तत्तथा, तथा गलितं स्वयं पतितं नतु छिन्नम् । ननु कथं पुत्रप्रेम्णैवेति मण्डनमपीदमिति कर्णस्य भूषणवत्तां दर्शयति, कीदृशे कर्णे ? कुवलयदलप्रापि कुवलयस्य नीलोत्पलस्य दलं पत्रं प्राप्नोतीति क्विप् । णिन्प्रत्ययान्तस्य विशेषणसमास इत्यन्ये । केचित्तु नीलोत्पलदलं प्राप्तुं सदृशीकर्तुं शीलं यस्य तत्तथा, बर्हविशेषणमिदमित्याहुः । मयूरं कीदृशं ? हरशशिरुचा शिवशिरःस्थितचन्द्रदीप्त्या धौतः संसृष्टोऽतिशुक्लीकृतोऽपाङ्गो नेत्रान्तो यस्य तादृशम्, शुक्लापाङ्गतयाऽत्रातिशुक्लता विवक्षिता ; एतेन शिवोऽपि पुत्रप्रेम्णा तदङ्गं स्पृशतीति भावः । शशिरुचैव धौतापाङ्गमित्युत्प्रेक्षेति केचित्, तन्न, उत्प्रेक्षाद्योतकाभावात् । उत्प्रेक्षैवेयमिवार्थस्य गम्यमानत्वादिति केचित् । कीदृशैर्गर्जितैः ? अद्रेः पर्वतस्य यद्ग्रहणं गुहादिष्वभिव्यापनं प्रतिध्वनिस्तेन गुरुभिः प्रवृद्धैर्गभीरैः । ज्योतिर्लेखेत्याद्यर्धेन पार्वतीप्रीतिरुक्ता, धौतापाङ्गमित्याद्यर्धेन शिवप्रीतिरुक्ता । आप्यायनानन्तरं गर्जितैर्नर्तनेन मान्यस्य प्रथमं प्रीणनं ततः कार्ये नियोजनं ज्ञापितम् । किञ्च, प्रागाप्यायनेन आकस्मिकगाम्भीरगर्जनश्रवणेन मेघाज्ञानात् कस्येदमननुभूतं गर्जितमिति भयाकुलताया अभावः रचितः ॥४६॥

आराध्यैनं शरवणभवं देवमुल्लङ्घिताध्वा
सिद्धद्वन्द्वैर्जलकणभयाद्वीणिभिर्मुक्तमार्गः ।
व्यालम्बेथाः सुरभितनयालम्भजां मानयिष्यन्
स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्तिम् ॥४७॥

स्कन्दाराधनसम्भूतनिर्विघ्नत्वाद् देवगिरेः सकाशात् चर्मण्वतीं नदीं यास्यसीति प्रतिपादयन्नाह । आराध्यैनं । एनम् इमं शरस्य वने भव उत्पत्तिर्यस्य तं देवं स्कन्दम् आराध्य समुपास्य उल्लङ्घितोऽतिक्रान्तोऽध्वा पन्था येन तादृशः सन् वीणिभिर्वीणावद्भिरर्थात् स्कन्दमुपवीणयितुमागच्छद्भिः सिद्धद्वन्द्वैः सिद्धमिथुनैर्जलकणभयात् तोयलवभयात् जलकणसम्पर्केण वीणातन्त्रीशैथिल्याशङ्कया दत्तमार्गः सन् परित्यक्तपथः सन् त्वं सुरभेर्देवधेनोस्तनयानां दुहितॄणां कपिलानाम् आलम्भात् मारणाज्जातां स्रोतोमूर्त्या प्रवाहरूपेण भुवि पृथिव्यां परिणतां पाकं गतां नदीरूपां रन्तिदेवस्य रन्तिदेवनाम्नो राज्ञः कीर्तिं यशो मानयिष्यन् तीर्थत्वात् संमानयिष्यन् व्यालम्बेथाः अवलम्बिष्यसे जलग्रहणाय आश्रयिष्यसीत्यर्थः । पुष्करण्यादिवदियं नदी कीर्तिस्तत्कृतत्वात् । पुरा किल सोमवंशोद्भवेन रन्तिदेवनाम्ना नृपेण गोमेधमहायज्ञैरिष्टम् । तत्र कपिलगवीनां मारणात् तद्रुधिरैः ऋषिप्रभावात्

चर्मण्वतीनाम या पुण्याऽतिशुक्ततोया नदी बभूव सा रन्तिदेवस्य कीर्तित्वेन प्रसिद्धाऽभूदिति **पौराणिका।** शरवणभुवमिति पाठे शरवण भूरुत्पत्तिस्थानं यस्य तम्। "आलम्भपिञ्जविशरघातोन्माथवधा अपी" त्यमरः। मानयिष्यन्निति तुमर्थे स्यतृ मानयितुमित्यर्थ । एतेन तीर्थस्नानादिफलसम्पत्त्या गतौ प्रोत्साहन सूचितम् ॥४७॥

**त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचौरे**
**तस्याः सिन्धोः पृथुमपि तनुं दूरभावात् प्रवाहम्।**
**प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टी-**
**रेकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम् ॥ ४८ ॥**

अद्भुतशोभाजनकत्वेन दिव्यदृष्टिपातेन तस्या परोपकारित्व मेघस्य ध्वनयितुमाह। त्वय्या। शार्ङ्गिणो विष्णोर्वर्णचौरे कान्तिहारके तद्वर्णसमानवर्णे कृष्णवर्णे त्वयि तस्या सिन्धोर्नद्याश्चर्मण्वत्या जलम् आदातु ग्रहीतुम् अवनते अवतीर्णे सति नूनं शङ्के निश्चित वा गगनगतयो नभोगामिनो देवविद्याधरादयो दृष्टीर्लोचनानि आवर्ज्य अधस्तिर्यक् कृत्वा तस्या एव सिन्धोः प्रवाहम् ओघं पृथुमपि महान्तमपि दूरभावात् विप्रकृष्टत्वात् तनुं स्वल्पं प्रेक्षिष्यन्ते द्रक्ष्यन्ति। दर्शनकारण दर्शयितुमुत्प्रेक्षते, भुव पृथिव्या स्थूल पीवर मध्ये मध्यभागे इन्द्रनील मणिभेदो यस्य तादृशमेकमद्वितीय श्रेष्ठ वा मुक्तागुणमिव हारमिव। अयमाशय, शुभ्रो जलप्रवाहो मेघच्छायया द्विधाभूतो नीलमणिमयमध्यहार इव शोभते इति हारोपमत्वात्तस्या नायिकात्व ध्वनितम्। विस्मय-कौतुकवत्त्वात्तद्दर्शनम्। दृष्टिरिय तारका नाम, यदुक्त,

"अधोगतविकाशा हि किञ्चिदुल्लसितारका।
दृष्टिर्निश्चलपक्ष्मोक्ता तारका तर्ककौतुके" ति ॥

वाक्यार्थोपमेयम् ॥४८॥

**तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणा**
**पक्ष्मोत्क्षेपादुपरिविलसत्कृष्णसारप्रभाणाम्।**
**कुन्दक्षेपानुगमधुकरश्रीजुषामात्मबिम्ब**
**पात्रीकुर्वन् दशपुरवधूनेत्रकौतूहलानाम् ॥ ४९ ॥**

चर्मण्वतीमुत्तीर्य दशपुरनगर यास्यसीति प्रतिपादयन् तत्र कामसम्पत्त्या प्रोत्साहयन्नाह। तामुत्तीर्य। तां चर्मण्वतीं नदीम् उत्तीर्य उल्लङ्घ्य अतिक्रम्य तत्पार गत्वा त्वम् आत्मबिम्ब स्वशरीर दशपुरस्य दशपुरनाम्नो नगरविशेषस्य या वध्व स्त्रियस्तासा नेत्रकौतूहलाना लोचनकौतुकाना पात्रीकुर्वन् स्थापनविषयीकुर्वन् अर्हतामापादयन् व्रज गमिष्यसि। नार्यश्चात्र त्रिविधा, काश्चित् सम्भोगसक्ता कादिचत् प्रोषितभर्तृका, काश्चिन्मानिन्य। तत्र यथासम्भव दृष्टिपाता, अत एव बहुवचनम्। कीदृशानाम्? भ्रूरेव लता तस्या विभ्रमो विलास मलीन(?)विशिष्टभ्रमण वा अनवस्थितचेष्टत्व वा स परिचितो विशेषेण विदितो यैस्तादृशानाम्, सुरतानुकूलतया स्मरोद्दीपके त्वयि रतशालिन्या स्निग्धा दृष्टिरिय तथाच,

"किञ्चित् सहासेव सविस्मयेव मन्त्रसमुत्क्षेपकटाक्षयुक्ता।
स्निग्धा प्रकाम प्रमदैरभीष्टा शृङ्गारजा दृष्टिरिह प्रदिष्टे" ति ॥

तथा उपरि ऊर्ध्वं पक्ष्मणा नेत्रलोम्नाम् उत्क्षेपादुन्मीलनात् विलसन्ति विशेषेण शोभमाना कृष्णेन कृष्णवर्णभागेन सारा श्रेष्ठा प्रभा तदितरभागजा दीप्तिर्येषा तादृशानाम्। विलसन्ती कृष्णसारस्य कृष्णमण्डलस्य प्रभा

येषामिति च व्याचक्षते । उपरि विलसन्ती कृष्णसारा प्रभा येषामिति न योऽयन्ति । केचित्तु उपरि विलसन्त ऊर्ध्वं स्फुरन्त उत्पतन्तो ये कृष्णसारा हरिणविशेषास्तेषामिव प्रभा येषां ते तथा, तेषां नेत्रेण सह कृष्णसारमृगसाम्यम्, कृष्णसारो हि आलोहितश्यामशुक्लवर्णमिश्रो भवति, नेत्रमपि तथेत्याहुः । प्रियतमागमनविश्वासहेतौ त्वयि हर्षात् प्रोषितभर्तृकाणामियं विकसिता नाम दृष्टिः, तथाच,

"प्रीतिविस्फारितदृशा मनागुन्नमितानना ।
दृष्टिर्विकसिता नाम ज्ञेया चन्द्रादिदर्शने' इति ॥

तथा कुन्दाना कुन्दपुष्पाणां क्षेपं स्तबकम् अनुगच्छन्ति ये मधुकरा भ्रमरास्तेषां श्रियं शोभां जुषन्ति भजन्ति यानि तानि तथा तेषाम् । कामोद्दीपकतया मानभङ्गहेतौ त्वयि मानिनीनां ललिता दृष्टिरियम्, तथा च,

"मधुरा कुञ्चिता या सस्मिता किञ्चिदुदञ्चिता ।
ललिता नाम सा दृष्टिः स्त्रीणां वल्लभलोकने" ॥ इति ।

अन्ये त्वेकामेव दृष्टिमाहुः । यद्यपि परिचितभ्रूलतेत्यादिविशेषणानि नेत्राणामेव घटन्ते न कौतूहलानां तथापि लक्षणया कौतूहलेन कौतूहलवन्ति नेत्राणि लक्ष्यन्ते । तेन च लक्षणानामायमलङ्कारः । यदुक्तं,

साक्षादनभिसम्बन्धात्तत्सम्बन्धिपरिग्रहः ।
यत्र सा लक्षणा दृष्टा वृत्तिर्वृत्तिविदां मते"ति ॥

"वदन्त्यार्या दशपुरं गुल्म-पत्तनभेदयो"रिति धरणिः । "गुच्छकः स्तवकः क्षेप" इति त्रिकाण्डशेषः । गुच्छो गुल्मः क्षेपः स्यादित्यन्य । कुन्दक्षेपः कुन्दविकाश इत्यन्ये । अनुगेत्यत्र डः, श्रीजुषामित्यत्र क्विप् । उपमालङ्कारः ॥४९॥

**ब्रह्मावर्तं जनपदमधश्छायया गाहमानः**
**क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद्भजेथाः ।**
**राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा**
**धारापातैस्त्वमिव कमलान्यभ्यसिञ्चन्मुखानि ॥ ५० ॥**

दशपुराद् ब्रह्मावर्तं यास्यसि, तत्र तदेकदेशभूतं कुरुक्षेत्रं वर्त्मवशात् पुण्यप्राप्तये च गमिष्यसीत्युपदिशन्नाह। ब्रह्मा । ब्रह्मावर्तं ब्रह्मावर्तनामानं जनपदं देशम् अधश्छायया अधस्तात् प्रतिबिम्बेन गाहमान आलम्बमानः समाक्रममाणः सन् त्वं तत् क्षत्राणां क्षत्रियाणां भीष्मादीनां प्रधनस्य युद्धस्य पिशुनं सूचकं कौरवं कुरुसम्बन्धि क्षेत्रं सिद्धस्थानं कुरुक्षेत्रं भजेथाः पुण्यस्थानत्वात् सेविष्यसे गमिष्यसीत्यर्थः । तत् किमित्याह यत्र क्षेत्रे गाण्डीवधन्वा अर्जुनः शितानां तीक्ष्णानां शराणां शतैः समूहैः राजन्यानां क्षत्रियसमूहानां मुखानि अभ्यसिञ्चत् अभिषिक्तवान्, यथा त्वं धारापातैर्धारावृष्टिभिः कमलानि पद्मानि अभिषिञ्चसि । एतेन शराणां बाहुल्यं सूचितम् ।

"सरस्वतीदृषद्वत्योः पुण्यनद्योर्यदन्तरम् ।
तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥
अत्र पर्यटनं वासो नराणां पुण्यदो मतः" ॥ इति ब्रह्मपुराणम् ।

"क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयो"रिति विश्वः । "क्षेत्रो नृपे क्षत्रिये चे"ति बलः । "युद्धमायोधनं जन्यं प्रधनं प्रविदारण' मिति । "पिशुनौ खलसूचका"विति चामरः । कुरूणामिदं कौरवं ण्णः । राजन्यानामित्यादिना कुरुपाण्डवयुद्धस्थानत्वेनाधिकपुण्योपचयहेतुत्वाद् गतौ प्रलोभनम्, "इष्टं धर्मे नियोजये"

दित्युक्ते धर्मे नियोजनद्वारेण सौहार्दञ्च सूचितम्। गाण्डीवं धनुर्यस्यासौ गाण्डीवधन्वा बहुव्रीहौ धनुषो धन्वन्, किंवा धन्वन्शब्देन विग्रह, गाण्डीवशब्दोल्लेखेन खाण्डवदाहप्रसङ्गोपस्थितेरर्जुनस्य बहुशरक्षेपशीघ्रता सूचिता।।५०॥

हित्वा हालामभिमतरसां रेवतीलोचनाङ्कां
बन्धुप्रीत्या समरविमुखो लाङ्गली याः सिषेवे।
कृत्वा तासामधिगममपां सौम्य सारस्वतीनाम्
अन्तः शुद्धस्त्वमपि भविता वर्णमात्रेण कृष्णः॥५१॥

तत्र कुरुक्षेत्रेऽवक्रान्त सरस्वतीजलं पास्यसीति प्रतिपादयन् धर्मसम्पत्त्या प्रोत्साहयितुमाह। हित्वा। हे सौम्य सुन्दर, धीर वा, लाङ्गली बलभद्र हालां मदिरां हित्वा त्यक्त्वा बन्धूनां बान्धवानां कुरुपाण्डवानां प्रीत्या स्नेहेन समरविमुखो युद्धपराङ्मुख सन् याः अपः सिषेवे पापप्रशान्त्यर्थं सेवितवान् तासां सारस्वतीनां सरस्वती-नामनदीसम्बन्धिनीनाम् अपां जलानाम् अधिगमं ग्रहणं कृत्वा त्वमपि अन्तरभ्यन्तरे शुद्धः पवित्रो भविता भविष्यसि, तथा पुण्यवत्त्वात्, अन्तर निर्मलो भविता, वर्णमात्रेण केवलं वर्णेन त्वं कृष्णः श्यामल पक्षे मलिनः, न केवलं बलभद्रः शुद्धोऽभवत् त्वमपि भावीत्यपेरर्थ। त्वमसीति क्वचित् पाठः। कीदृशीं हालाम् अभिमतोऽभीष्टो रस स्वादो यस्यास्तादृशीम्। तथा रेवत्या लोचनस्याङ्कश्चिह्न प्रतिबिम्बं यस्यां तादृशीम्, एतेन मदिराया स्वच्छत्वं कामिनः कामिन्या सह मधुपानञ्च सूचितम् एवं रेवत्यपि त्यक्तेति ध्वनितम्। रेवती बलभद्रभार्या, "सुरा हलिप्रिया हाले"त्यमरः। सरस्वत्या इमा सारस्वत्यस्तासां, ष्ण, अन्तरभ्यन्तरं शुद्धं यस्य स तथेति समस्तमपि वदन्ति। भवितेति भविष्यति तृन्। बलभद्र वसुदर्शननामानं ब्राह्मणं हतवान्। तदवसरे कुरुपाण्डवानां युद्धं प्रवृत्तम्। तदा यद्यत्र मयाऽवस्थीयते कुरुपाण्डवानां युद्धार्थं निमन्त्रणं दुष्परिहरम्। मया बन्धुवधो न कर्तव्य। अत एवास्मिन्नेवावसरे ब्रह्महत्याप्रायश्चित्तं क्रियते इति विचिन्त्य बलभद्रः प्रायश्चित्तार्थं प्रतिस्रोतः सरस्वतीं जगाम। तथाच, भारतम्,

"ब्रह्महत्यापनोदाय प्रयतो नियतेन्द्रियः।
मुहुर्भूत्वाऽन्वसरत प्रतिस्रोतः सरस्वती"मिति ॥

हालाया रेवत्याश्च त्याग। बलभद्रस्य सारस्वतजलाधिगमात् तादृशपापक्षयोऽभूत्। अत एव तदधिगमेन पापक्षयात् त्वमपि शुद्धो भविष्यसीति गतौ प्रलोभनम् ॥ ५१ ॥

तस्माद्गच्छेरनुकनखलं शैलराजावतीर्णां
जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम्।
गौरीवक्त्रभ्रुकुटिरचनां या विहस्येव फेनैः
शम्भोः केशग्रहणमकरोदिन्दुलग्नोर्मिहस्ता ॥ ५२ ॥

कुरुक्षेत्रात् कनखलाख्यतीर्थसमीपे गङ्गाद्वाराभिधहिमालयकटकं यास्यसीत्युपदिशन्नाह। तस्मात्। तस्मात् कुरुक्षेत्रात् अनुकनखलं कनखलनामकतीर्थस्य समीपे कनखलं लक्षीकृत्य वा, शैलराजात् हिमालयात् अवतीर्णां प्रादुर्भूतां लम्बितां सगरस्य राज्ञस्तनयानां पुत्राणां स्वर्गाय स्वर्गारोहणाय सोपानपङ्क्तिम् आरोहणपरम्परामिव जह्नोः कन्यां गङ्गां गन्छेर्गमिष्यसि, या जह्नुकन्या फेनैर्डिण्डिरैः गौर्याः पार्वत्याः वक्त्रे या भ्रुवो कुटिः कौटिल्यं तस्या रचना निर्माणविशेषः विहस्येव विशेषेण हसित्वेव इन्दौ शम्भुशिरःस्थे चन्द्रे लग्नाः सम्बद्धा ऊर्मिरेव तरङ्ग एव हस्तो यस्यास्तादृशी सती शम्भोर्महादेवस्य केशग्रहणं केशालम्बनम् अकरोत् कृतवती। अयं

भाव', महादेवस्यातिसुभगार्धशरीरस्था पार्वती कान्तसमीपवर्तिनीं गङ्गां प्रतिनायिकामिवावलोक्य ईर्ष्यया भ्रुकुटीं कृतवती, अतो गङ्गापि सुभगा विप्रलब्धेव सौभाग्यगरिम्णा त्वमर्धाङ्गस्थत्वादात्मानं बहु मन्यसे पश्य अहं शिरस्स्थायिनी भवामीति तामुपहस्येव तत्समक्षमेव शम्भोः केशग्रहणं कृतवती, किंवा वञ्चितया गङ्गया गौरीसमक्षमेव शम्भोः केशग्रहणारम्भे गौर्यां ईर्ष्यया कृतां भ्रुकुटिमनादृत्य शम्भोः केशग्रहणं कृतमिति विप्रलब्धैवं करोत्येवमुक्तम् । तथाच,

"अङ्गुलीतर्जनं कान्ते करेषु ग्रहणं तथा ।
तया वञ्चितया कार्यं काञ्चीदाम्ना च बन्धन"मिति ॥

विप्रलब्धालक्षणं यथा, "दूतीं प्रेष्य च कृत्वा च किञ्चित् साङ्केतिकं प्रियः ।
दैवात्तु नागतो यस्या विप्रलब्धामिमां विदु"रिति ॥

खण्डिताविप्रलब्धयोर्नायिकयोरिङ्गितमिदं ध्वनितमिति शर्वः गौरीवक्त्रेति गौरीभ्रुकुटीरचनामिति वाच्ये वक्त्रपदमधिकमिति, वक्त्रञ्च भ्रुवौ च वक्त्रभ्रु समाहारद्वन्द्वः, तस्य या कुटिः रचना ताम्, ईर्ष्यातिशयेन भ्रूकौटिल्यवत् मुखकौटिल्यमपि स्यादिति च व्याचक्षते । केचित्तु वक्रभ्रुकुटीति पठित्वा वक्रा क्रूरा भीषणा चासौ भ्रुकुटिश्चेति विग्रहः, "वक्रः शनैश्चरे क्रूरे"इति त्रिकाण्डशेष इति वदन्ति । हास्य शुभ्रं वर्णयन्तीति फेनैर्विहस्येत्युक्तम् । तथाच, "शृङ्गारः श्यामलो ज्ञेयः सितो हास्यः प्रकीर्तित" इति । हस्तेन विना ग्रहणं न सम्भवतीति इन्दुलग्नोर्मिहस्तेत्युक्तम् । गङ्गावतरणादिकथाऽतिप्रसिद्धेति नोक्ता । रूपकोत्प्रेक्षासङ्करोऽयम् ॥५२॥

**तस्याः पातुं सुरगज इव व्योम्नि पश्चार्धलम्बी**
**त्वञ्चेदच्छस्फटिकविशदं तर्कयेस्तिर्यगम्भः ।**
**संसर्पन्त्या सपदि भवतः स्रोतसि च्छाययाऽसौ**
**स्यादस्थानोपगतयमुनासङ्गमेनाभिरामा ॥ ५३ ॥**

ततो गङ्गाजलं पास्यसीति प्रतिपादयितुं तत्रत्यजनाः प्रयागस्मरणात् त्वामभिनन्दयिष्यन्तीति ध्वनयन्नाह । तस्याः । त्वं चेत् यदि सुरगज इव ऐरावत इव तिर्यक् वक्रीभूतः पूर्वार्धेन पूर्वकायार्धेन लम्बी लम्बमानोऽधोगामी सन् तस्याः जह्नुकन्यायाः अच्छस्फटिकवत् विशदं शुभ्रम् अम्भो जलं पातुं तर्कयेः इच्छेः तदा सा जह्नुकन्या सपदि तत्क्षणं स्रोतसि प्रवाहे संसर्पन्त्या सञ्चरन्त्या भवतस्तव छायया प्रतिबिम्बेन अस्थाने प्रयागव्यतिरिक्तस्थले उपगताया मिलिताया यमुनायाः सङ्गमेन सम्पर्केण अस्थाने उपगतो यो यमुनासङ्गमस्तेन वा अभिरामा अतिरमणीया स्यात् भविष्यति । प्रयाग एव हि गङ्गायमुनयोः सम्भेदो नान्यत्र, प्रयागे हि गङ्गायाः शुभ्रं जलं यमुनायाः कृष्णजलेन मिलितं सत् यथा शोभते तथा तव कृष्णच्छायया मिलितं सत् शोभां लप्स्यते इति भाव । तर्कयेरिति तर्कः अभिकाङ्क्षायामित्यस्य रूपम् । केचित्तु तर्कये तिर्यगिति पठित्वा यदि त्वं तस्या अम्भः पातुं पूर्वार्धलम्बी भविष्यसि तदा भवतश्छायया अस्थानोपगतयमुनासङ्गमेनाभिरामा स्यादिति तर्कये सम्भावयामि, तर्कः स्यादभिलापेऽपीत्युक्तेस्तर्कये अभिलषामीति कस्यचिद्व्याख्यानं न सदित्याहुः । उत्प्रेक्षेयम्, अभूतोपमेत्यन्ये, उत्प्रेक्षोपमानयोः संसृष्टिरित्यपरे ॥५३॥

**आसीनानां सुरभितशिलं नाभिगन्धैर्मृगाणां**
**तस्या एव प्रभवमचलं प्राप्य गौरं तुषारैः ।**
**वक्ष्यस्यध्वश्रमविनयने तस्य शृङ्गे निषण्णः**
**शोभां शुभ्रां त्रिनयनवृषोत्खातपङ्कोपमेयाम् ॥ ५४॥**

गङ्गाजल पीत्वा हिमालयस्य शिखरे विश्राम्यसीति दर्शयन्नाह । आसी । आसीनानाम् उपविशतां मृगाणां कस्तूरीमृगाणां नाभिगन्धैर्नाभ्यिवयवगन्धै कस्तूरिकागन्धै सुरभिता सुगन्धीकृता शिला पाषाणा यत्र तादृश तस्या एव गङ्गाया एव प्रभव प्रथमोपलब्धिस्थान तुषारैर्हिमैर्गौर शुभ्रम् अचल पर्वत हिमालय प्राप्य तस्य अच लस्य श्रमविनयने अध्यायासखण्डके शृङ्गे शिखरे निषण्ण सन् कृतावस्थिति सन् शुभ्राम् उज्ज्वला त्रिनयनस्य महादेवस्य वृषेण उत्खात उत्पाटित शृङ्गाप्रधारितो य पङ्क कर्दमस्तेन उपमेयाम् उपमार्हां सदृशीं शोभा वक्ष्यसि धारयिष्यसि । आसीनानामिति "धातुसम्बन्धे प्रत्यया" इति शान, उपविष्टानामित्यर्थ । सुरभितेति "ले कृत्या ख्याने गि' रिति कृतौ नि तत क । सुरभितशिलमिति रम्यताचिह्नध्वनि ।

"नाभिर्मुख्यनृपे चक्रमध्य-क्षत्रिययो पुमान् ।
द्वयो प्राणिप्रतीके स्यात् स्त्रिया कस्तूरिकामदे" इति मेदिनि ।

एवशब्दो वाक्यालङ्कारे उत्कर्षप्रतिपादने वा । तस्यैव शृङ्गे इति याजयन्त्यन्ये । तुषारैर्गौरमित्यनेन शैत्य चिह्नं सूचितम् । श्रमविनयन इत्यत्र मौलभ्य शैत्यञ्च हेतु, अध्वश्रमस्य विनयने खण्डननिमित्त निमित्त सप्तमीति च व्याचक्षते । "शुभ्रमुद्दीप्तशुक्लयो रित्यमर । त्रिनयनवृषोत्खातेत्यत्र पङ्कोत्खननस्यान्यथा असम्भवादुपमानोपमेयवलाच्च शृङ्गप्रतिपत्ति, उपमानोपमेयता च हिमालयस्य शुक्लत्वात् शृङ्गलग्नस्य मेघस्य श्यामत्वात् । कश्चित्तु शुभ्रत्रिनयनवृषोत्खातपङ्कोपमेयामिति पठित्वा शुभ्रशब्दस्य उज्ज्वलार्थस्य पङ्कविशेषण त्वेन सङ्गति कार्या, त्रिनयनवृषस्य शुभ्रत्वाव्यभिचारेण विशेषणसमासासम्भवात्, पङ्कस्य उद्दीप्तत्व श्याम त्वोत्कर्ष इति व्याचक्षते । पङ्केनोपमानात् "भर्तृभक्तो भट. श्वेवे"त्यादिवत् हीनोपमादोषो न वाच्य, "वृषो ऽय भगवान् धर्म" इति नन्दिकेश्वरपुराणम्, तेन तदुद्धृतपङ्कस्य प्रशस्तत्वात् । स्वभावोपमयो सङ्कृष्टि रलङ्कार ॥५४॥

तं चेद्वायौ सरति सरलस्कन्धसङ्घर्षजन्मा
बाधेतोल्काक्षपितचमरीबालभारो दवाग्नि ।
अर्हस्येन शमयितुमल वारिधारासहस्रै-
रापन्नार्तिप्रशमनफला सम्पदो ह्युत्तमानाम् ॥ ५५ ॥

प्रत्युपकारमुपदिशन् सदाचाराचरणेन पुण्यसम्पत्त्या प्रोत्साहयितुमाह । तञ्चे । वायौ वाते सरति वहति सति सरलाना स्वनामख्याततरूणा स्कन्धस्य प्रकाण्डस्य सघर्षात् जन्म उत्पत्तिर्यस्य तादृशो दवाग्निर्वनाग्नि उल्काभिर्ज्वालाभि क्षपितो दग्धश्चमरीणा मृगभेदाना वालभार केशसमूहो येन तादृश सन् चेत् यदि त हिमालय बाधेत पीडयेत् तदा त्वं वारिधारासहस्रै रसङ्ख्येयजलधाराभि एन दावाग्नि शमयितु शान्ति नतु निर्वापयितुम् अलमत्यर्थम् अर्हसि किंवा एन पर्वत शमयितु शान्तियुक्त कल्याणिन कर्तुम् अर्हसि । किमवश्यमेव कर्तव्यमित्य र्थान्तरन्यासमाह हि यस्मात् उत्तमाना महता सम्पदा विभूतय आपन्नाना विपद्ग्रस्ताना या आर्ति पीडा तस्या यत् प्रशमन प्रशान्तिस्तदेव फल प्रयोजन यासा तथाभूता भवन्ति । एतेन त्वम् आत्मदागामित्वादुन्माऽतिशय नोद्धत इत्येतात् श्रेष्ठश्च अहमापन्नो विरहदु खी मत्प्रिया च वियोगिनी अत एव चास्या सन्देशवाक्यप्रेषणेन मा प्रीणयितु यतेथा इति ध्वनितम् । तच्चेद्वात सरतीति क्वचित् पाठ । उल्केत्यादिविशेषणेन शान्त्यर्थं प्रज्वालन शान्तौ परोपकारित्व ध्वनितम् । 'वा च वनवह्नी न दवो दावश्च दृश्यत इति शाश्वत । अर्हस्येन सुखयितु मिति पाठे एन पर्वतम् ॥५५॥

ये त्वां मुक्तध्वनिमसहनाः स्वाङ्गभङ्गाय तस्मिन्
दर्पोत्सेकादुपरि शरभा लङ्घयिष्यन्त्यलङ्घ्यम् ।
तान् कुर्वीथास्तुमुलकरकावृष्टिहासावकीर्णान्
के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः ॥५६॥

असाधारणचिह्नभूतेन शरभेण तं गिरिं ज्ञास्यसि, तत्र शरभाक्रान्तिशङ्कया तल्लङ्घनभोभागेन गमिष्यतो-स्तुपदिशन्नाह । ये त्वां । ये शरभाः पशुभेदाः अलङ्घ्य लङ्घयितुमशक्य मुक्तध्वनिं त्यक्तगर्जितं त्वाम् असहनाः सोढुमसमर्थाः सन्तः दर्पस्याहङ्कारस्य उत्सेकादाधिक्यात् तस्मिन् हिमालये उपरि ऊर्ध्वं स्वाङ्गभङ्गाय निजावयवभञ्जनमात्रफलाय त्वां लङ्घयिष्यन्ति लङ्घयितुमुपक्रमं करिष्यन्ति तान् शरभान् तुमुला सशब्दा प्रचुरा वा या करका वर्षशीला तस्या या वृष्टिर्वर्षणं सैव हासो हास्य शुक्लत्वात् तेनावकीर्णान् विक्षिप्तान् निर्भर्त्सितान् वा त्वं कुर्वीथाः करिष्यसि । वस्तु वर्षोपलवृष्ट्या ते विहसनीया इत्यर्थान्तरं न्यस्यति निष्फले फलशून्ये आरम्भे यत्नस्तात्-पर्यं येषां तादृशाः के वा जनाः परिभवस्य पदं स्थानं न स्युर्न भवन्ति अपि तु सर्व एव । किंशब्द आक्षेपे, वा-शब्दोऽर्थान्तरन्यासद्योतने । अयमत्रार्थः ; शरभाः सिंहादप्यधिकबलत्वेनोद्भूतगर्वतया मेघनिनादं श्रुत्वा प्रति-द्वन्द्विबोधेन मेघाक्रमणायाकाशमुत्पतन्ति निरवलम्बनत्वात् तस्मात् पतन्तो भग्ना भवन्ति, वस्तुतस्तत्र प्रतिपक्षा-भावात् स्वाङ्गभङ्ग एव पर्यवस्यतीति निष्फलारम्भयत्नत्वात् उपहासयोग्या एवेति । करकावृष्टिहासावकीर्णानित्यनेन साधवोऽवहासं कुर्वाणानधःकुर्वन्ति न तु नाशयन्तीति ध्वनितम्, उक्तञ्च,

"अहङ्कारवतो नीचानचलन्तो महत्त्वतः ।
अवहासं प्रकुर्वाणानधः कुर्वन्ति साधवः" ॥ इति ।

शरभो नाम जन्तुरूर्ध्वाधोभागेनाष्टचरणः, "शरभोऽष्टापदः स्मृतः" इति भागुरिः । क्वचित्तु ये संर-म्भोत्पतनरभसा इति शरभा लङ्घयेयुर्भवन्तमिति पाठः । तत्र संरम्भ आवेग आटोपस्तेन यदुत्पतनमुत्फाल-स्तत्र रभसो हर्षो येषां तादृशाः शरभा भवन्तं लङ्घयेयुः आक्रमेयुः, "आवेगाटोपसंरम्भा" इति त्रिकाण्ड-शेषः । क्वचित्तु करकावृष्टिघातावकीर्णानिति पाठः ; तत्र करकावृष्टिभिस्तांस्ताडयेरित्यर्थः । स्पष्टमर्थान्तरन्यासः ॥५६॥

तत्र व्यक्तं दृषदि चरणन्यासमर्धेन्दुमौलेः
शश्वत्सिद्धैरुपहितबलिं भक्तिनम्रः परीयाः ।
यस्मिन् दृष्टे करणविगमादूर्ध्वमुद्धूतपापाः
कल्पन्तेऽस्य स्थिरगणपदप्राप्तये श्रद्दधानाः ॥ ५७॥

तत्र धर्मसम्पत्त्या प्रोत्साहयन्नाह । तत्र । तत्र हिमालये दृषदि प्रस्तरे व्यक्तं प्रभावातिशयात् पङ्क इव विस्पष्टं सिद्धैः प्राप्तसिद्धिभिरुपहितबलिं विरचितपूजाविधिम् अर्धेन्दुमौलेर्महादेवस्य चरणन्यासं पदचिह्नं त्वं भक्त्या नम्रः सन् परीयाः सर्वतो गमिष्यसि प्रदक्षिणयिष्यसि द्रक्ष्यसीति वा, सर्वे गत्यर्था ज्ञानार्था इति दर्शनस्य ज्ञानभेद-त्वात्, प्रणमेत्यन्ये । किं प्रयोजनमित्याह यस्मिन् चरणन्यासे दृष्टे अवलोकिते सति श्रद्दधानाः श्रद्धावन्तो जनाः दूरं विप्रकृष्टम् उद्धूतम् उत्क्षिप्तं त्यक्तं पापं यैस्तादृशाः सन्तः करणविगमात् देहत्यागात् अन्यस्मिन् जन्मनि अस्य अर्धेन्दुमौलेः स्थिरा चिरं निश्चला अव्यभिचारिणी गणानां नन्दिभृङ्गिप्रभृतीनां यत् पदं तस्य प्राप्तये कल्पन्ते समर्था भवन्ति । "शक्तार्थवषड्"इत्यादिना शक्तार्थे चतुर्थी, करणविगमादिति ल्यब्लोपे पञ्चमी, करणविगमं प्राप्येत्यर्थः । हेतावित्यन्ये । "करणं साधनक्षेत्रकायगात्रेषु कर्म"इति विश्वः ॥५७॥

**शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः**
**संरक्ताभिस्त्रिपुरविजयो गीयते किन्नरीभिः ।**
**निर्ह्रादी ते मुरज इव चेत् कन्दरेषु ध्वनिः स्यात्**
**सङ्गीतार्थो ननु पशुपतेस्तत्र भावी समग्रः ॥ ५८ ॥**

पुनरपि भर्मसम्पत्ति गर्जितेनोपदिशन्नाह । शब्दा । तत्र पर्वते ननु ते तव ध्वनिश्चेत् यदि मुरज इव मृदङ्ग ध्वनिरिव कन्दरेषु दरीषु निर्ह्रादी प्रतिध्वनिमत्त्वात् गम्भीरशब्दवान् स्यात् तदा पशुपतेर्महादेवस्य सङ्गीतार्थ सङ्गीताभिधेय सङ्गातमेव किंवा सङ्गीतप्रयोजन समग्र सम्पूर्णो भावी भविष्यति, वंशकण्ठस्वरमुरजध्वनिमेलक सङ्गीतमिति वंशकण्ठस्वर दर्शयति, तत्र अनिलैः, पूर्यमाणा कीचका सरन्ध्रवंशा मधुर यथा स्यात्तथा शब्दायन्ते शब्द कुर्वन्ति एव संरक्ताभिस्तद्दर्शनात् सम्यगनुरक्ताभिर्मधुरस्वराभिर्वा किन्नरीभि त्रिपुरस्याङ्गनाभिस्त्रिपुरस्य विजयो ऽर्थान्महेश्वरस्य गीयते । यद्यपि "वंशाः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धता इत्यमरेणोक्त तथापि वाताद न्यान्यसंघट्टजनितकेङ्कारध्वनिकारिणोऽपि कीचका स्यु , अत एव तन्निरासाय अनिलपूर्यमाणरन्ध्रनिर्गतमधुरध्वनि वक्तु युक्तमेतदिति न पुनरुक्ति । किंवा यत एवम्भूता अत एव कीचका इत्युक्तार्थोऽलङ्कार , तथाच

"अर्थाक्षेपेण लब्धस्य यच्छब्देनानुकीर्तनम् ।
उक्तियोगाभिधानोऽयम् अलङ्कार स्मृतो यथे" ति ॥

किंवा कीचकशब्दोऽत्र वंशमात्रवचन, तथाच, कीचक कथित प्राज्ञैर्वेणु-दानवभेदयो"रिति । "वेणु-तद्भेदयोर्दैत्ये द्रुमभेदे च कीचक " इत्यन्य । "रक्तोऽनुरक्ते नील्यादिरञ्जिते मधुरस्वर" इति सर्वः । तिसृणा पुराणा समाहारस्त्रिपुर, त्रिपुरोपाख्यान प्रसिद्धमेव । "निर्ह्रादि शब्दगाम्भीर्य"मिति वल । मुरजशब्देनात्र मुरजध्वनिरेव वाच्योऽभेदोपचारात् । किंवा मुरज इति सप्तम्यन्त यथा मुरजध्वनि कन्दरेषु निर्ह्रादी भवति तथा तव ध्वनि कन्दरेषु निर्ह्रादी चेदित्यर्थ । अत्र वचनभेदो न दोषो रसावहत्वनाद्धेजकत्वात् । तथाच दण्डी ।

"न लिङ्गवचने भिन्ने न हीनाधिकतापि वा ।
उपमादूषणायाल यत्रोद्वेगो न धीमता" मिति ॥
"कण्ठवंशमृदङ्गाना शब्दै सङ्गीतक विदु" रिति पुरुषोत्तम ।

ननु सम्भावनाया सानुनयसम्बोधने वा ॥ ५८ ॥

**प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान् विशेषान्**
**हंसद्वारं भृगुपतियशोवर्त्म यत् क्रौञ्चरन्ध्रम् ।**
**तेनोदीचीं दिशमनुसरेस्तिर्यगायामशोभी**
**श्यामः पादो बलिनियमनाभ्युद्यतस्येव विष्णोः ॥५९॥**

हिमालयाच्चलितस्त्व क्रौञ्चाचलोपरि गन्तुमशक्यत्वात्तदीयरन्ध्रेण गमिष्यसीत्युपदिशन्नाह । प्रालेया । तान् तान् उत्तमान् विशेषान् प्रकारान् नद्यादिस्वरूपान् अतिक्रम्य उल्लङ्घ्य प्रालेयाद्रेर्हिमालयस्य उपतट प्रान्तदेश समीपे यत् क्रौञ्चस्य क्रौञ्चनाम्न पर्वतस्य रन्ध्र छिद्र तेन रन्ध्रेण उदीचीमुत्तरा दिश त्वम् अनुसरेर्गमिष्यसि । प्राले-याद्रेरुपतट तान् तान् अनिर्धारितान् विशेषान् अतिक्रम्येति च व्याचक्षते । कथ मया तज्ज्ञातव्यमित्याह, कीदृश क्रौञ्चरन्ध्र , हंसद्वार हंसाना मानससरोवरगमनवर्त्म हंसाना तत् परिचित तेन एवागन्तव्यम् एतदर्थमेव मया प्राक् हंसा भवत सहाया उक्ता इति भाव । कथ तत् रन्ध्र बभूवेति पुनर्विशिनष्टि भृगुपत परशुरामस्य यशो-

वर्त्म कीर्तिमार्गः कीर्तिप्रसरणहेतुत्वात् । कथं बृहत्कायो रन्ध्रेण गमिष्यामीत्याह त्वं कीदृशः बलेर्दैत्यराजस्य नियमनाय बन्धनाय अभ्युद्यतस्य प्रोत्थितस्य विष्णोस्त्रिविक्रमस्य श्यामः कृष्णः पाद इव तिर्यगायामशोभी अनृजुदैर्घ्येण शोभितुं शीलं यस्य तादृशः सन् । कामरूपतया सूचीगत्या गमिष्यसीत्यर्थः । पाद इह ऊरुजङ्घासमुदायार्थस्तेन श्याम इत्युक्तम् । अत्र स्थितैरूर्ध्वभूतः श्याम इव दृश्यते इति वा । त्वमपि श्यामः । ब्रह्माण्डभङ्गभयात् पादस्य तिर्यक्त्वम् । तथाच वामनपुराणं, "ब्रह्माण्डभङ्गमाशङ्क्य तत्तिर्यक्पदमुद्यत"मिति । भगवतः पाद इव भवानवलोकनीय इति प्रलोभना । भृगुशब्दोऽयं भृगुपलक्षितकुले वर्तते अतस्तत्कुलश्रेष्ठत्वात् भृगुपतिरित्युच्यते भृगुतनयत्वादस्य । पुरा किल परशुरामो महेश्वराद् धनुर्विद्यामाददान ऋजुवर्त्मना शीघ्रं तत्समीपं जिगमिषुः क्रौञ्चगिरिं बाणैर्विभिद्य रन्ध्ररूपं सन्निहितं वर्त्म चक्रे । अतोऽद्यापि तथा लोकप्रसिद्धत्वात्तस्य कीर्तिपद्धतिरिव । तत्रैव मानससरः सन्निहितत्वात् हंसानां गमनद्वारमभूत् । उपमेयम् । हंसच्छलात् परशुरामयशो गच्छतीत्युत्प्रेक्षेयमित्यन्ये यान्तु कुर्व्याख्या ॥ ५९ ॥

गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसन्धेः
कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः ।
शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं
राशीभूतः प्रतिदिशमिव त्र्यम्बकस्याट्टहासः ॥६०॥

क्रौञ्चरन्ध्रेण निर्गत्य कैलासं गमिष्यसीत्युपदिशन्नाह । गत्वा । ऊर्ध्वं परं देशं गत्वा प्राप्य कैलासस्य पर्वतस्य त्वम् अतिथिरभ्यागतः स्याः भवेः, अतिथाविव त्वय्यादरं करिष्यतीत्यर्थः । अतिथिशब्दो लक्षणया प्राप्तपरः, त्वं प्राप्तो भविष्यसीत्यर्थः इत्यन्ये । कीदृशस्य कैलासस्य ? दशमुखस्य रावणस्य भुजैर्बाहुभिरुच्छ्वासिताः किञ्चिदुत्तोलनेन शिथिलीकृताः, प्रस्थसन्धयः सानुसन्धिभागा यस्य तादृशस्य । एतेनाद्भुतदर्शनं विहस्य । तथा त्रिदशवनितानां देवस्त्रीणां, दर्पणस्य आदर्शस्य, स्फटिकमयत्वेन प्रतिबिम्बहेतुत्वात् रूपकम्, रम्योक्तिरियम् । यः कैलासः कुमुदविशदैः कैरवधवलैः शृङ्गोच्छ्रायैः शिखरोन्नतिभिरुच्छ्रयवच्छिखरैः खमाकाशं वितत्य व्याप्य स्थितोऽस्ति । उत्प्रेक्ष्यते, प्रतिदिशं दिशि दिशि राशीभूतः पुञ्जीभूतस्त्र्यम्बकस्य महादेवस्य अट्टहासो महाहासमिव स्थितः, हासस्य शुक्लत्वेन वर्णनीयत्वात्; अट्टहासोऽपि महत्त्वादाकाशव्यापी । अत एव अट्टहासत्वेनावगतिः । शिवस्यायमट्टहासो रावणगर्वमत्यजनित । कथा प्रसिद्धैव । इवोत्प्रेक्षायाम् । चशब्दो हिमालयापेक्षया समुच्चये ॥६०॥

उत्पश्यामि त्वयि तटगते स्निग्धभिन्नाञ्जनाभे
सद्यःकृत्तद्विरददशनच्छेदगौरस्य तस्य ।
शोभामद्रेः स्तिमितनयनप्रेक्षणीयां भवित्रीम्
अंसन्यस्ते सति हलभृतो मेचके वाससीव ॥६१॥

स्वभावसुन्दरोऽयं गिरिर्मेलितस्य मम सम्पर्कं किमनुभवते ? सत्यमनुभवते शोभाजनकत्वादिति प्रतिपादयन्नाह । उत् । त्वयि तटमेकदेशं गते प्राप्ते सति, तस्याद्रेः पर्वतस्य कैलासस्य, भवित्रीं भाविनीं शोभाम् अहम् उत्पश्यामि उत्प्रेक्षे तर्कयामि; यथा मेचके नीले वाससि वस्त्रे, अंसन्यस्ते स्कन्धार्पिते सति, हलभृतो बलभद्रस्य शोभां पश्यामि । त्वयि कीदृशे ? स्निग्धम् मसृणं चिक्कणं 'भिन्नं मर्दितं किंवा भिन्नेन लोष्टादिना भिन्नं मिश्रीकृतं यदञ्जनं कज्जलं तद्वदाभा छविर्यस्य तादृशे, अतिस्निग्धश्यामे इत्यर्थः । नातिदूरगतत्वान्नात् पूर्वानुभूतकज्जलमेव दृष्टान्तयति स्म । कीदृशस्याद्रेः ? सद्यस्तत्क्षणं कृत्तः छिन्नो यो द्विरदस्य हस्तिनो दशनो दन्तस्तस्य

यश्छेदः खण्डं तद्वद् गौरस्य शुभ्रस्य; छेदोपमानेनातिस्निग्धशुभ्रत्व सूचितम्। कीदृशीं शोभाम्? स्तिमितैरद्भुतत्वात् निश्चलैर्दीर्घदृष्टिर्वा, नयनैश्चक्षुभिः, प्रेक्षणीयां दर्शनार्हाम्। केचित्तु शोभामित्यत्र लीलामिति पठित्वा लीलां विलास छलोक्त्या यदा कदाचित् शृङ्गारवशात् स्वस्कन्धे वस्त्रं निक्षिपति तदैवेति सूचितमित्याहुः। उपमेयम्॥ ६१॥

हित्वा तस्मिन् भुजगवलयं शम्भुना दत्तहस्ता
क्रीडाशैले यदि च विचरेत् पादचारेण गौरी।
भङ्गी भक्त्या विरचितवपुः स्तम्भितान्तर्जलौघः
सोपानत्वं व्रज पदसुखस्पर्शमारोहणेषु॥ ६२॥

गौरीशङ्करचरणस्पर्शोपजातपुण्यप्राप्तये उपदिशन्नाह। हित्वा तस्मिन्। तस्मिन् क्रीडाशैले केलिपर्वते कैलासे शम्भुना महादेवेन भुजगवलय सर्पमेव कटक हित्वा त्यक्त्वा दत्तो हस्तो यस्यै तादृशी सती, कृतहस्तावलम्बा सती, गौरी पार्वती पादचारेण चरणभ्रमणेन यदि च विचरेत् विशेषेण लीलया गच्छेत्, तदा त्वं भङ्गी कामरूपत्वाद् विभङ्गयुक्तः सन्, भक्त्या आदरेण विभागेन, विरचितवपुर्विशिष्ट कृतशरीर, स्तम्भित ऊर्ध्वं निश्चलीकृत्य विधृतोऽन्तर्मध्ये जलौघस्तोयसमूहो येन तादृशः सन्, आरोहणेषु उपरिगमनेषु प्रतिशृङ्गोत्थानेषु पदसुखश्चरणसुखकारी स्पर्शो यत्र तादृश यथा स्यात्तथा सोपानत्वम् आरोहणरूपता व्रज गमिष्यसि। भुजगस्य भयङ्करत्वात् तद्वलयवता हस्तेन विलासिनीहस्तग्रहणमनुचितमिति भुजगवलय हित्वेत्युक्तम्। यदिचेति समुदितमव्यय पक्षान्तरे। भङ्गीति प्राशस्त्ये इनः प्रशस्तसोपानसमानरूपत्वेनात्मान निर्मास्यसीत्यर्थ। भङ्गी वैदग्धी तया या भक्तिर्विभागस्तयेति च वदन्ति। जलौघे चलति सति पादस्खलन स्यादिति स्तम्भितान्तर्जलौघ इत्युक्तम्। पदसुखस्पर्शमिति सोपानत्वमित्यस्य विशेषणमित्यन्ये। तन्न युक्त, धर्मस्य स्पर्शायोगात्। आरोहणेष्विति बहुवचनेन नानाविधलीलागमन सूचितम्॥ ६२॥

तत्रावश्यं वलयकुलिशोद्घट्टनोद्गीर्णतोयं
नेष्यन्ति त्वां सुरयुवतयो यन्त्रधारागृहत्वम्।
ताभ्यो मोक्षस्तव यदि सखे घर्मलब्धस्य न स्यात्
क्रीडालोलाः श्रवणपरुषैर्गर्जितैर्भाययेस्ताः॥ ६३॥

दिव्यस्त्रीसम्पर्कात् प्रोत्साहयन्नाह। तत्र। तत्र कैलासे सुरयुवतयो देवाङ्गना, धारणात् वलयकुलिशैः हेमकङ्कणस्थहीरकैर्यानि उद्घट्टनानि क्षतानि तैरुद्गीर्णतोय निर्गतजल त्वा यन्त्रधारागृहत्व जलयन्त्रमन्दिरत्वम्, अवश्य नेष्यन्ति प्रापयिष्यन्ति। हे सखे मित्र, ताभ्यः सुरयुवतिभ्यो घर्मलब्धस्य निदाघसमयप्राप्तस्य तव, मोक्षो मोचन यदि न स्यात् न भवेत्, तदा त्व श्रवणपरुषैः श्रुतिकटुभि कर्णभेदिभिर्वा गर्जितैर्ध्वनिभि. क्रीडालोला क्रीडनाकाङ्क्षातत्परास्ताः सुरयुवतीर्भाययेस्त्रासयिष्यसि। ग्रीष्मे गृहेषु यन्त्रप्रयोगैर्जलवर्षाणि क्रियन्ते, उपलक्षितत्वात् तान्येव यन्त्रधारागृहाण्युच्यन्ते। उक्तञ्च—"प्रतिभित्ति जलस्रावि यन्त्रधारागृह विदु" रिति। घर्मलब्धस्येति अमोक्षणे हेतु, क्रीडालोला इति धर्मत्वे हेतुर्भयहेतुश्च अन्यासक्तानाम् आकस्मिकशब्दश्रुतौ भयमुत्पद्यते। भयात् त्वां त्यक्ष्यन्तीत्यर्थः॥ ६३॥

हेमाम्भोजप्रसवि सलिलं मानसस्याऽऽददानः
कुर्वन् कामात् क्षणमुखपटप्रीतिमैरावतस्य ।
धुन्वन् वातैः सजलपृषतैः कल्पवृक्षांशुकानि
च्छायाभिन्नस्फटिकविशदं निर्विशेस्तं नगेन्द्रम् ॥६४॥

अद्भुतदर्शनात् सुखसम्पत्त्या प्रोत्साहयन्नाह । हेमा । त्व कामात् स्वेच्छया हेमाम्भोजप्रसवि स्वर्णपद्मजनकं मानसस्य सरोवरस्य सलिल जलम् आददानो गृह्णन् तथा कामात् ऐरावतस्य सुरगजस्य क्षणमल्पकालं मुखपटेन प्रीति सुखं कुर्वन् सम्पादयन्, तथा कामात् सजलपृषतैर्जलकणसहितैर्वातैः कल्पवृक्षस्य सुरतरोरंशुकानि सूक्ष्मवस्त्राणि वस्त्राणि वा, धुन्वन् कम्पयन् छायया कान्त्या भिन्नैः पद्मरागादिभेदेन विपरिणतैः स्फटिकैर्विशदम् उज्ज्वलं तं नगेन्द्र गिरिश्रेष्ठं कैलासं निर्विशेः उपभोक्ष्यसे । हेमाम्भोज प्रसोतु शीलं यस्य तत्तथा, शीलार्थे इन्; किंवा हेमाम्भोजप्रसववत्, अस्त्यर्थे इन् । मुखपटप्रीति तदारोपणसुखं कुर्वन् ग्रीष्माभितप्ते दन्तिनां हि मुखे नेत्रे च वस्त्राणि दीयन्ते । ननु ऐरावतः पूर्वस्यां दिशि वर्तते तत् कथमिदं सङ्गच्छते ? उच्यते, स्वेच्छाचारित्वात् क्रीडार्थमैरावतोऽपि मानसं गच्छति, इन्द्रगमनाद्वा तत्र गतः । ननु पूर्वमुक्तं "पथि परिहरन् स्थूलहस्तावलेपानि"ति ऐरावतान्तिकगतौ न तत्सम्भवः ? उच्यते, प्रसिद्धरूपं विहाय कामरूपत्वात् तत्र मुखपटरूपेणोपगन्तव्यमिति मुखपटश्च प्रीतिहेतुर्गजानां, किंवा चिरस्थितौ स्थूलहस्तावलेपः सम्भाव्यते, अत एव क्षणग्रहणम्; किंवा दूरतः स्थिता-च्छादनात् तथा कुर्वन् । एतेन परोपकारो ध्वनितः । कामादित्यस्य सर्वत्र हेतुता । के चित्तु कामात् कामरूपात् क्षणमुखपटप्रीतिं कुर्वन्; "कामरूपेऽपि कामः स्या" दित्युत्पलिनीत्याहुः । अतिदृष्ट्या अंशुकानामचलत्वं स्यात् वैवर्ण्यं च, तेन सापराधत्वमित्युक्तं जलपृषतैरिति । ईदृग्दर्शनेन सुखम् अलङ्काचित्वा ध्वनितम् । सजलपृषतैरित्यत्र जलद सलिलैरिति पठित्वा जलदेति सम्बोधनम्, सलिलैर्मेघैरिति व्याचक्षते के चित् । कल्पवृक्षलक्षणं यथा—

इदानीं प्रव्यक्तालकाचिह्नं गत्वाविमानमुपदिशन् विश्रामास्पदमाह । तस्योत् । हे कामचारिन् स्वेच्छागामिन्, प्रणयिन इव वल्लभस्येव तस्य कैलासस्य उत्सङ्गे ऊर्ध्वसङ्गे सति अथच क्रोडे स्रस्ता प्रभ्रस्यन्ती, गङ्गैव अलकनन्दैव अथच गङ्गेव दुकूलं पट्टवस्त्रं यस्याः, अधोभागस्थितगङ्गत्वात्, तादृशीम् अलकां कुबेरपुरीम् अथच कामिनीं, पुनर्भूयो दृष्ट्वा त्वं न न ज्ञास्यसे अपितु ज्ञास्यस एव, द्वयोर्निषेधयोः प्रकृतार्थस्य गमकत्वात् । या अलका वो युष्माकं काले वर्षासु उच्चैरुच्छ्रितैर्विमानैः प्रासादैः सलिलोद्गारं जलोद्गारि अभ्रवृन्दं मेघसमूहं वहति धारयति, यथा कामिनी विलासिनी मुक्ताजालैर्मौक्तिकसमूहैर्ग्रथितं खचितम् अलकं चूर्णकुन्तलं वहति । स्रस्तेति वर्तमाने कर्तरि क्तः । अम्बराशब्दोऽयमलकायोगात् धराः आपतति कामिनीमप्याह । कामचारिन्नित्यनेन कामचारित्वात् पूर्वमपि गतोऽसि, अतः पूर्वदृष्टां पुनर्दृष्ट्वा स्मरणं ते भविष्यति, दर्शनमात्रादेव सेयमलकेति तां प्रत्यभिज्ञास्यसीत्यर्थ इति सूचितम् । पुनर्दृष्ट्वेत्यनेनैव दृष्टेति या व इत्याद्युक्तम् । अन्ये तु कैलाससमीपे स्वेच्छया त्वमलकां दृष्ट्वा न न ज्ञास्यसे ज्ञास्यस एव, पुनरिति वाक्यालङ्कारे, यथोच्यते वैलक्षण्यविवक्षया "स पुनर्ब्राह्मण एवे"ति । या व इत्यादिना मेघान्तरगमनं सूचितमित्याहुः । सलिलमुद्गिरतीति सलिलोद्गारं "टात् पन्निति पण्" उच्चैरिति तृतीयान्तम् अव्ययं वा । विमानैर्वहतीति विश्रामध्वनि "प्रासादेऽपि विमानं स्यात् सिकतायामपि वालुके" त्युत्तरतन्त्रं "विमानमस्त्रियां सौधे देवयानेऽपि दृश्यते" इति रन्तिदेवः । "अलकाश्चूर्णकुन्तलाः" इत्यमरः । मुक्तातुल्या जलबिन्दवः, अलकतुल्यमभ्रवृन्दम् कामिनीतुल्या अलका, अभ्रवृन्दालकयोगादलकेति ध्वनितम् । परमार्थतस्तु अलमत्यर्थं कं सुखम् अत्रेति अलका पृषोदरादि । वाक्यार्थोपमेयम् ॥६५॥



# [ उत्तरमेघः ]

विद्युत्वन्तं ललितवनिता· सेन्द्रचापं सचित्राः
सङ्गीताय प्रहतमुरजा· स्निग्धगम्भीरघोषम् ।
अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥ ६६ ॥

सम्प्रति प्रासादैर्मेघस्य साम्य दर्शयन्नलकायाश्चिह्न रम्यताचाह । विद्यु । यत्रालकायां प्रासादा धनिगृहास्तैस्तैरनन्तरोक्तैर्विशेषैर्विशेषणै [विद्यु] त्वत्त्वादिभिस्त्वा तुलयितु सदृशीकर्तुम् अल समर्था , तां पुनर्दृष्ट्वा न न ज्ञास्यसे इति पूर्वेण सम्बन्ध । साम्यमाह, कीदृश त्वां कीदृशा प्रासादा ? विद्युत्वन्तं तडिद्वनितायुक्तं, ललिता ललितयुक्ता सविलासा वनिता स्त्रियो येषु ते तथा, ललितगुणयुक्ता हि नार्यश्चञ्चला भवन्तीति विद्युत्साम्यम् । ललितलक्षण यथा —

"हस्तपादाङ्गविन्यासभ्रूनेत्रास्यप्रयोजितम् ।
सुकुमारविधानेन ललित तत् प्रकीर्तितम्" ॥ इति ।

इन्द्रचापेन शक्रधनुषा सहितम्, इन्द्रधनुषो नानावर्णत्वात् सचित्रमित्यर्थ, सचित्रा· चित्रणालेख्येन सहिता । सङ्गीताय गानार्थं प्रकर्षेण हतास्ताडिता मुरजा मृदङ्गा येषु ते तथा स्निग्धा मधुरा गम्भीरा मन्द्रा घोषा ध्वनयो यस्य तम् । अन्तर्गर्भे तोयानि जलानि यस्य तम्, मणिमयी भूर्भूमि प्रदेशो येषा ते तथा, मणिशब्दोऽत्र सामान्यपरोऽपि उपमानौचित्यात् विशेषपरस्तेन मणिशब्दोऽत्र स्फटिकवाची हीरकवाची वा, अत एव शौभ्राद् जलेन साम्यम् । अपां शुभ्र मेवरूपमिति नैयायिकाः । तुङ्गम् उच्चम् अभ्रंलिहम् अत्युच्छ्रितत्वेनाकाशस्पर्शि मेघस्पर्शि वा अग्र चूडा येषां ते तथा । कान्तप्राणान्विता प्रत्ययोपमेयम् । यदाह दण्डी—

"कान्तं सर्वजगत्कान्तं लौकिकार्थानतिक्रमात् ।
तच्च वार्ताभिधानेषु वर्णनास्वपि दृश्यते" ॥

केचित्तु तैस्तैरेकरूपैरनिर्वचनीयैर्वेत्याहु । प्रासादास्त्वां· तुलयितुमित्येतावतैव वाक्यसमाप्तौ तैस्तैर्विशेषैरिति अत्य तसादृश्यप्रतिपादनार्थम् ॥६६॥

हस्ते लीलाकमलमलकं बालकुन्दानुविद्धं
नीता लोध्रप्रसवरजसा पाण्डुतामानने श्रीः ।
चूडापाशे नवकुरवकं चारु कर्णे शिरीषं
सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम् ॥ ६७ ॥

पुनरन् सर्वर्तुसम्भवं रामणीयकं विहाय पुनरपि प्रतिपादयन्नाह । हस्ते । यत्रालकायां वधूनां हस्ते लीला कमलं क्रीडारम्यम् अस्ति शरदेत्यर्थः । तथा हि यत्र ऋत्वन्तरं नास्ति तत्रापि प्रयुज्यते इति वृद्धा । शरदेति ऋ सर्वर्तुवर्णनात् । एवम् अलक पूर्णकुन्तल , बालकुन्दै कुन्दकलिकाभिरनुविद्धं ग्रथितम् । कौमुदीकारस्त्वाह पूर्णकलिकारन्ध्रेण वेणी कुन्दकलिका प्रवेश्य ग्रथनमनुविद्धम्, उक्त "एचिवर् केशविन्यासे बेधविद्धग्रथन"मि

तीति। यद्यपि "अलकाश्चूर्णकुन्तलाः" इत्यमरः तथापि अर्धर्चादित्वात् क्लीबत्वमपि, "स्वभाववक्राण्यलकानि तासा" मिति भारविः। एवम् आनने श्रीर्मुखशोभा लोध्रप्रसवरजसा लोध्रपुष्पपरागेण पाण्डुता पाण्डरतां नीता प्रापिता, एतत्तु सुरतसम्भाविखेदसम्वरणार्थं मण्टमण्डनार्थञ्च। एवं चूडापाशे केशविन्यासविशेषे नवकुरुबकम् अपर्युषितमम्लानपुष्पं म्लिष्टीपुष्पं वा "चूडापाशस्तु धम्मिल" इति सर्वः। चूडापाशो केशसमूहे इत्यन्ये। कौमुदीकारस्त्वाह शिखाख्या कुसुमबन्धनी केशलता चूडापाशः स च यक्षाङ्गनानामेव, यदुक्तम्, "चूडापाशो भवेद् यक्षस्त्रीणां न त्वन्ययोषिता" मिति। एवं कर्णे चारु सुन्दरम् अपर्युषितं शिरीषं शिरीषपुष्पम्। एवं सीमन्ते सिँथी इति ख्याते केशरचनायां त्वदुपगमजं तव मेघस्य उपगमोऽभ्यागमो यत्र स त्वदुपगमोऽर्थात् वर्षाकालः तत्र जातं नीपं कदम्बपुष्पम्, "नीपप्रियकक्कदम्बास्तु हलिप्रिये" इत्यमरः। नीपः कदम्बविशेषः, कदम्बाकृति बदरास्थिप्रमाणं नीपमिति च व्याचक्षते। यत्रेत्यस्य वधूनामित्यस्य च सर्वत्रान्वयः। यत्र हस्तादौ पद्मादिकं तां दृष्ट्वैव ज्ञास्यसे इति पूर्वेण सम्बन्धः।

ननु कमलादीनां कालो नोक्तो नीपस्य तु [कालः] उक्तः तत् कोऽत्राभिप्रायः? उच्यते, अयमभिप्रायः, पद्मादीनां नानाकालसमुत्पत्तिः नीपस्य तु वर्षास्वेव, यदुक्तं—

"पद्मादीनामकालेऽपि समुत्पत्तिस्तु वीक्ष्यते।
यत्तु वर्षाभवं द्रव्यं प्रायस्तन्नान्यदा भवे"दिति॥

अन्यत्राप्युक्तं—"अन्यकालभवं पुष्पमुक्तं व्यभिचरत्यपि।
वर्षाभवन्तु कुसुमं सर्वथा नान्यदा भवे"दिति॥

अतो वर्षाभवमपि नीपमलकायां सर्वकाले भवतीति। यद्यपि शरदि वसन्तादौ च कमलं वर्त्तते तथाप्यवश्यम्भावात् प्राचुर्याच्च कमलेन शरत् सूचिता। एवं यद्यपि मार्गशीर्षपौषमाघेषु अन्यदापि कुन्दं भवति तथापि कुन्देन हेमन्तो ज्ञापितः। यद्यपि हेमन्तशिशिरग्रीष्मेषु लोध्रं पुष्यति तथापि लोध्रेण शिशिरो ज्ञापितः। एवं यद्यपि कुरुबकं वसन्ते कदाचिदन्यदापि भवति तथापि कुरुबकेण वसन्तो ज्ञापितः। एवं यद्यपि शिरीषो ग्रीष्मे हेमन्ते च विकसति तथापि शिरीषेण ग्रीष्मः सूचितः॥६७॥

**यस्यां यक्षाः सितमणिमयान्येत्य हर्म्यस्थलानि**
**ज्योतिश्छायाकुसुमरचनान्युत्तमस्त्रीसहायाः।**
**आसेवन्ते मधु रतिरसं कल्पवृक्षप्रसूतं**
**त्वद्गम्भीरध्वनिषु शनकैः पुष्करेष्वाहतेषु॥६८॥**

यूनां क्रीडास्थानादिना चिह्नमुपदिशन् प्रेतमाह्लादयितुमाह। यस्याम्। यस्यामलकायां यक्षा उत्तमस्त्रीसहायाः प्रशस्तवनिताद्वितीयाः सन्तः, हर्म्यस्थलानि सौधादस्थानानि एत्य प्राप्य तव गम्भीरध्वनिरिव ध्वनिर्येषां तेषु पुष्करेषु मृदङ्गपुटेषु शनकैर्मन्दं गाननृत्यानुकूलं यथा स्यात्तथा आहतेषु ताडितेषु सत्सु मधु मद्यम् आसेवन्ते पिबन्ति, ता दृष्ट्वा ज्ञास्यसे इति सम्बन्धः। हर्म्यस्थलानि कीदृशानि? सितमणिमयानि स्फटिकहीरकघटितानि तथा ज्योतिषां नक्षत्राणां छाया प्रतिबिम्बान्येव कुसुमरचना पुष्पाकारा येषु तानि तथा। ननु शाब्दैरन्वयेन कथं सितमणिभूमौ तारकाप्रतिबिम्बमुत्पद्यते? अन्यमणियोगातिस्वच्छत्वात् प्रतिभाति प्रतिबिम्बं यथा दर्पणे शुभ्रपुष्पम्। किंवा सिता निर्मला मणयः पद्मरागमरकतादयः सितमणिरित्युदाहृत्य सामान्यस्य विशेषपरत्वात् इन्द्रनीलमणिरिति केचित्। सितेति तालव्यशकारं पठित्वा सितः कृष्णो मणिः इन्द्रनीलमणिः इत्यर्थं इति

व्याचक्षते केचित्। क्रीदृशं मधु? रतौ रसोऽनुरागो, रतेरास्वादो वा यस्मात् तत्तथा, रतिरनुरागः स एव रसोद्भवस्तमिव रूपकं मूर्तानुरागमित्यर्थः इति शर्वः। तथा कल्पवृक्षप्रसूतं देवद्रुमोत्पन्नं कल्पवृक्षपदोपन्यासेन इच्छाद्यमत्वात् अभिलाषानुरूपमधुनो लाभो ध्वनितः। शनकैरित्यनेन सङ्गीतानुगतमिदमिति सूचितम्। शनकैः क्षण मधु पीयते क्षणं मृदङ्गा वाद्यन्ते इत्यर्थः, इति च वदन्ति। तादृग्गेहोपरिभागे मृदङ्गवादनं मधुपानञ्च मन्दीभूतं काममुत्तेजयतीत्येवमुक्तम्। तथाच—

"मधुपानं मृदङ्गानां वादनं चन्द्ररश्मयः।
प्रासादशिखरं रम्यं पुनरुत्तेजयेत् स्मरमि' ति ॥
सितं विशुद्धमाख्यातं सितं शुक्रमुदाहृतम्" ॥ इति **रन्तिः**।
"ज्योतिर्वह्नौ रवौ नेत्रे दीप्तौ च तारकासु चे" ति **धरणिः**।
"पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले" **इत्यमरः** ॥ ६८ ॥

**गत्युत्कम्पादलकपतितैर्यत्र मन्दारपुष्पैः**
**पत्त्रच्छेद्यैः कनककमलैः कर्णविभ्रंशिभिश्च।**
**मुक्ताजालैः स्तनपरिसरच्छिन्नसूत्रैश्च हारै-**
**र्नैशो मार्गः सवितुरुदये सूच्यते कामिनीनाम् ॥ ६९ ॥**

इदानीं मर्त्यासम्भवमन्दारपुष्प-कनककमलचिह्नमुपदिशन् कामिनीसन्दर्शनेन प्रोत्साहयन्नाह। गत्युत्। यत्रालकायां सवितुः सूर्यस्य उदये प्रत्यूषे मन्दारस्य सुरतरोः पुष्पैः तथा कनककमलैः स्वर्णपद्मैस्तथा मुक्ताजालैर्मुक्तानां जालैराभरणभेदैर्जालसूत्रावलीन्यायेन परिहितैर्मौक्तिकैस्तथा हारैः स्वनामख्यातैर्मुक्ताकलापालङ्कारैश्च चतुर्भिः कर्तृभिः कामिनीनाम् अतिशयितकामानां नैशो रात्रिसम्बन्धी मार्गः पन्थाः सूच्यते प्रकाश्यते। किंवा मन्दारपुष्पादिभिर्हेतुभिः करणैर्वा सूच्यतेऽर्थाज्जनैः, अनेन पथा अभिसारिका गता इति तत्तत्सन्दर्शनाद् विज्ञायते इत्यर्थः। तामिति सम्बन्धः। कीदृशैर्मन्दारपुष्पैः? गत्युत्कम्पात् गतौ य उत्कम्प उत्फालनं शीघ्रता, किंवा कदाचित् काचिज्जानातीति शङ्कया य उत्कम्प उद्गतवेपथुस्तस्मात् हेतोः अलकपतितैश्चूर्णकुन्तलाद् गलितैः; तथा पत्त्रं विरचितं छेद्यं छेदार्हं पत्त्रं येषां तैः। छेद्यमिति भावे ण्यत् वा। पत्त्रच्छेदैरिति क्वचित् पाठः। इदं कनककमलैरित्यस्यापि विशेषणम्। गत्युत्कम्पोऽत्र भ्रंशे छेदे च हेतुः। कीदृशैः कनककमलैः? कर्णात् विभ्रंशिभिः च्युतैः। कीदृशैर्मुक्ताजालैः? स्तनयोः परिसरैर्घर्षणैः। पुनः किंभूतैः? छिन्नानि सूत्राणि ग्रथनतन्तवो येषां तैः। इदं हारैरित्यस्यापि विशेषणम्।

"पञ्चैते देवतरवो मन्दारः पारिजातकः।
सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्" ॥ **इत्यमरः**।

"आनायः पुंसि जालं स्या" दिति च। मुक्ताजालं मुक्तागार इति प्रसिद्धं मण्डनम्। तथा च "मुक्तागारं परिदध्याद्वीः कण्ठे पयोधरे" इति, "वेशनं स्यात् परिसर" इति **शर्वः**। **पुरुषोत्तमस्त्वाह**, मुक्ताजालैर्मुक्तागृहैः हारहारावारैः स्तन परिसरच्छिन्नानि स्तनपरिसरच्छिन्नैः पञ्चादिलाद्वर्जिति। केचित्तु मुक्ताजालैर्मुक्तागृहैरथादि धम्मिल्लादिमण्डनोपयुक्तैस्तथा स्तनपरिसरैः कञ्चुलिकाभिस्तथा हारैः छिन्नसूत्रैरिति त्रयाणामेव विशेषणमित्याहुः। स्तनपरिसरः स्तनभरस्तेन स्तनपरिसरे स्तनपर्यन्ते वा छिन्नं सूत्रं येषां तादृशैः। स्तनपरिसरैरित्यपपाठोऽप्रयोजकदोषापातादन्वयाभावाच्चेति **बृहस्पतिः**। किन्त्वयमस्य प्रमादः पूर्वटीकाकारैः स्तनपरिसरै-

रित्यस्यैव व्याख्यातत्वात्, प्राचीनबहुपुस्तकेषु तत्पाठस्य दृश्यमानत्वाच्च । निशाया अयं नैश एष । मार्गं कटिरिति भ्रम्यतया नैश पन्था इति केचित् पठन्ति । कामोऽतिशयेनास्त्यासामिति कामिन्य , ताश्च भयमपहायाभिसरन्त्येव । तथा च—

"प्राकारभित्तिदृढपञ्जररक्षितवर्गास्तिष्ठन्ति बद्धगतयो ह्यमिहनागा ।
स्त्रीणान्तु विनशयसारथिनोदितानां नालङ्घ्यमस्ति भुवनत्रितयेऽपि किञ्चि" दिति ॥

उदारमाधुर्यप्राणा स्वभावोक्ति ॥ ६९ ॥

**नीवीबन्धोच्छ्वसितशिथिलं यत्र बिम्बाधराणां**
**वासः कामादनिभृतकरेष्वाक्षिपत्सु प्रियेषु ।**
**अर्चिस्तुङ्गानभिमुखगतान् प्राप्य रत्नप्रदीपान्**
**ह्रीमूढानां भवति विफलप्रेरणा चूर्णमुष्टि ॥ ७० ॥**

घृततैलप्रदीपवद्रत्नप्रदीपचिह्नमुपदिशन् तथाविधाद्भुतदर्शनेन प्रोत्साहयन्नाह । नीवी । यत्रालकायाम् अनिभृतकरेषु अनिवारितहस्तेषु प्रियेषु कामात् रतिरागातिशयात् नीवी वस्त्राञ्चलग्रन्थिरतया यो बन्धो गाढत्व नीव्येव बन्धो बन्धन वा, तस्योच्छ्वसित सावकाशत्व तेन शिथिल श्लथ वासो वस्त्रम् आक्षिपत्सु सत्सु, ह्रिया लज्जया मूढाना मूर्खाणां कार्याकार्यानभिज्ञाना यक्षस्त्रीणा चूर्णमुष्टि सुगन्धिद्रव्यक्षोदमुष्टि , अर्चिषा दीप्त्या तुङ्गान् उच्छ्रितान्, अभिमुखगतान् सम्मुखप्राप्तान्, रत्नप्रदीपान् रत्नान्येव तत्कार्यकारित्वात् प्रदीपान् प्राप्य विफलप्रेरणा निष्प्रयोजनविक्षेपा भवति, तामिति सम्बन्ध । शिथिलं हि वास आक्षिप्त सद् भ्रश्यतीति नीवीबन्धोच्छ्वसितशिथिलमुक्तम् ; नीवीबन्धोच्छ्वसनेन वस्त्रशैथिल्यमज्ञाना सात्त्विकभावोदयात् , तथा च "भवेच्च शिथिल वस्त्र नितम्बाना निबन्धन' मिति । गुह्यदर्शने हि लज्जा भवतीति वास आक्षिपत्स्वित्युक्तम् । कामादिति प्रियनिष्ठम्, किंवा कामादित्यस्य अनिभृतेत्यनेन सम्बन्ध । कामादेव प्रियकरो न वारित स्त्रीभिरित्यर्थादित्यर्थ । पश्चाद्वर्तिनि मन्दे च प्रदीपे तथाविधावलोकनाभावात् न लज्जेत्युक्तम् अर्चिस्तुङ्गा [ नभिमुखगता ] निति । शृङ्गारिभिस्तु समाद्विचूर्णं घर्मगन्धादिव्यपोहार्थं क्रीडागृहे स्थाप्यते, घर्माम्बुपद्रवे देहोपरि तत् क्षिप्यते, तन्मुष्टिभिर्लज्जावतीभिर्नवोढाभिरपि प्रदीपो निर्वाप्यते ; ता हि अन्धकार एव सुरतरता भवन्ति । यदाह वात्स्यायन —

"प्रदोषे निविडध्वान्ते यन्त्रिता मन्दसाध्वसा ।
सुखेन व्यवसायिन्यो रागवत्यो भवन्ति च' ति ॥

अत एव चूर्णमुष्ट्या दीपो निर्वातीति मुष्ट्यैव रत्नप्रदीपस्तु मुष्ट्या न निर्वातीति अजानत्योऽपि कामवशात् मुग्धत्वाद्वा तदभिभावनया चूर्णमुष्टिप्रक्षेप कुर्वन्ति । किञ्च वस्त्रापहरणे दीपनिर्वापणं शास्त्रोक्तम्, तथा च—

"अंशुकहरणे चूर्णमुष्ट्या कर्णोत्पलेन वा ।
दिवा प्रदीपान् निर्वाप्य सुखेन रमतेऽङ्गने' ति ॥

रत्नप्रदीपानिर्वापणेनलज्जया ताड्यमाना तत्स्पर्श सुखम् । चूर्णमुष्टिरिति मुष्टिग्रहणेनानादरेण , सम्पूर्णमिव चूर्णं चूर्णमुष्टिरित्यवगम्यम् । उदारप्राणा स्वभावोक्तिरियम् ॥७०॥

नेत्रा नीताः सततगतिना ये विमानाग्रभूमी-
रालेख्यानां स्वजलकणिकादोषमुत्पाद्य सद्यः ।
शङ्कास्पृष्टा इव जलमुचस्त्वादृशा यत्र जालै-
र्धूपोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति ॥ ७१ ॥

नानाप्रकारप्रासादचिह्नं प्रतिपादयन् वातवशात् तत्र प्रविष्टानां मेघानां निःसरणोपायमाह । नेत्रा । यत्रालकायां नेत्रा प्रेरकेण सततगतिना वायुना ये त्वादृशास्त्वत्तुल्या जलमुचो मेघा विमानानां सौधानाम्, अग्रभूमीः श्रेष्ठप्रदेशान् अर्थात् द्वारेणाभ्यन्तरभागान् नीताः प्रापितास्ते जलमुचः, आलेख्यानां चित्राणां स्वजलकणिकाभिरात्मीयसूक्ष्मतोयबिन्दुभिर्दोषं वैरूप्यम् आर्द्रविलसिताम् उत्पाद्य जनयित्वा, शङ्कास्पृष्टा इव सापराधत्वात् भयाक्रान्ता इव सन्तः सद्यस्तत्क्षणं जर्जराः खण्डखण्डीभूताः सूक्ष्माः सन्तः जालैर्गवाक्षैर्निष्पतन्ति निःसरन्ति बहिर्भवन्ति, यतस्ते धूपस्य कृष्णागुरुधूपस्य य उद्गार उद्वमस्तस्यानुकृतिः सादृश्य तत्र निपुणाः कुशलाः, धूमवदतिनिभृतरूपा इत्यर्थः । अन्येऽपि सापराधा भयात् गुप्तरूपेण कयाचिद्दिशा निःसरन्तीत्येतदुक्तम् । तां ज्ञास्यसे इति सम्बन्धः । अत्र "ये" इत्युक्तत्वात् ते इति गम्यते । अग्रभूमिः शिखरप्रदेश इति च व्याचक्षते । एतेन प्रत्यवायसम्भवत्वेऽपि वाताधीनगतित्वात् ते प्रविष्टास्तद्वत् त्वं चेत् वातप्रेरितो गमिष्यसि तदा तथैव निःसरिष्यसीति ज्ञापितम् । नवजलकणैर्दोषमुत्पाद्येति क्वचित् पाठः । अत्रान्येषां व्याख्यान्तरमुपेक्षितमहत्वात् ॥७१॥

यत्र स्त्रीणां प्रियतमभुजोच्छ्वासितालिङ्गितानाम्-
मङ्गग्लानिं सुरतजनितां तन्तुजालावलम्बाः ।
त्वत्संरोधापगमविशदैश्चोदिताश्चन्द्रपादै-
र्व्यालुम्पन्ति स्फुटजललवस्यन्दिनश्चन्द्रकान्ताः ॥७२॥

अन्यत्रासुलभं प्रतिगृहवर्ति चन्द्रकान्तं चिह्नं रम्यताम दर्शयन् मेघस्य चन्द्रानाच्छादनमुपदिशन्नाह । यत्र । यत्रालकायां चन्द्रकान्ता मणिविशेषाः स्त्रीणां सुरतजनितां सम्भोगोत्पादिताम् अङ्गग्लानिं गात्रखेदं व्यालुम्पन्ति, तामिति सम्बन्धः । कुतोऽङ्गग्लानिरित्याह; कीदृशीनां ? प्रियतमेन भुजाभ्यामुच्छ्वासिनम् उच्छ्वासगीत्वम् आलिङ्गितम् आलिङ्गनं यासाम् उच्छ्वासितं च यथा स्यात्तथा आलिङ्गितानां वा गाढालिङ्गितानामित्यर्थः ; किंवा प्रियतमेन भुजाभ्यामुच्छ्वासितानां पुनरायितार्थं देहोपरि मृतानाम् आलिङ्गितानाम् । भुमिरधिनश्चन्द्रकान्तमणिनं स्पर्शनिहर इत्याह, कीदृशास्ते ? तन्तुजालावलम्बाः सर्वेषोपरि सूत्रकल्पप्रथिताः; तन्तुना जाल गवाक्षमवलम्बमाना इत्यन्ये । स्यन्दमानश्चन्द्रकान्तो स्मरनिद्रानिवारकीत्याह स्फुटजललवस्यन्दिनः प्रव्यक्ततोयबिन्दुस्राविणः । कथं स्यन्दन्त इत्याह, त्वत् मेघोऽपि आच्छादन तस्यापगमेन अभावेन विशदैर्धवलैश्चन्द्रस्य पादै रश्मिभिश्चोदिताः प्रेरिताः स्पृष्टाः । भामिनी तु अन्योऽपि पादाहतः कन्दर्पभुजलस्यन्दी भवति इति । त्वदिति मेघजनिमाश्रालानं बोद्धव्यम् । अपगमनमुपगतत्वादधःस्थितमेघावरणरहितत्वेनेन्दुपादा निर्मला इत्यर्थः । अत एव निर्मलचन्द्रकान्ताश्मा- सर्वालङ्कृतसुरतजन्यदेहावसादानां द्वितीयसुखे सदा भवन्ति पर्यवसितोऽर्थः । अत्रान्येषां व्याख्यानान्तरमद्दत्वादुपेक्षितम् ॥ ७२ ॥

मत्वा देवं धनपतिसखं यत्र साक्षाद्वसन्त
प्रायश्चापं न वहति भयान्मन्मथः षट्पदज्यम् ।
सभ्रूभङ्गप्रहितनयनैः कामिलक्ष्येष्वमोघै-
स्तस्यारम्भश्चतुरवनिताविभ्रमैरेव सिद्धः ॥ ७१ ॥

शिवसन्दर्शनपुण्येन विलासिनीचेष्टाकाममन्मथया च प्रोत्साहयन्नाह । मत्वा । यत्रालकायां धनपतिसखं कुबेरमित्रं देवं महादेवं साक्षात् प्रत्यक्षरूपेण नतु प्रतिमादिरूपेण वसन्तं तिष्ठन्तं मत्वा ज्ञात्वा, प्रायः उत्प्रेक्षे, भयात् पूर्वंभस्मीकृतत्वात् त्रासात्, मन्मथः कामश्चापं धनुर्न वहति न धारयति, तामिति सम्बन्धः । धनुरेव किं न वहति इति न, गुणशून्यत्वात् किं न वहति इति च नेत्याह, कीदृशं चापम् ? षट्पदज्यं भृङ्गगुणं पौष्पमित्यर्थः, तेनैव पूर्वं कृतापराधत्वात् । यद्येवं तर्हि कथं कामित्वमित्याह, तस्य कामस्य कामिलक्ष्येषु कामिष्वेव शरव्येषु आरम्भः उद्यमः चतुराणां मनोहराणां वनितानां स्त्रीणां विभ्रमैर्विलासैरेव सिद्धो निष्पन्नः । तस्य चापस्याऽऽरम्भः कार्यमित्यन्ये । कीदृशैः ? सभ्रूभङ्गं यथा स्यात्तथा, प्रहितानि प्रेरितानि नयनानि यत्र तैः, तथा अमोघैः अव्यर्थैः । एतेन भ्रूवल्ली चापः कटाक्षाः शराः कामिनो लक्ष्याणीति ध्वनितम् । एतच्च कामकारणमन्येनाप्युक्तम् । यथा —

"सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां
लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव ।
भ्रूचापाकृष्टमुक्ताः श्रवणपथगता नीलपक्ष्माण एते
यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ती"ति ॥

देवमिति, अन्योऽपि कुबेरस्य सखा सम्भाव्यते इत्युक्तम् । प्रायः शब्द उत्प्रेक्षाद्योतने । तथा च दण्डी —

"मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः" इति ॥

तर्द्धात्तित्वात् हस्तप्राप्येन स्तवकेन गुच्छेन नमितो नम्रतां प्रापित, चिह्नध्वनिना रम्यत्वेन प्रोन्ग्राहनमिदम्। धनपतिगृहानिति एनप्रत्ययान्तोत्तरशब्देन योगे द्वितीया, "गृहाः पुंसि च भूम्न्येवे"त्यमरः। गृहादुत्तरेणेति पाठे विशेषेऽपि क्वचित् सामान्यप्रवृत्तेर्दिक्शब्देन योगे पञ्चमी। गृहशब्द एकवचनान्तोऽपि नपुंसकमस्ति, "गृहं गेहोदवसित"मित्यमरः। कान्तप्राणोपमेयम् ॥७४॥

वापी चास्मिन् मरकतशिलाबद्धसोपानमार्गा
*हैमैश्छन्ना कमलमुकुलैः स्निग्धवैदूर्यनालैः।*
यस्यास्तोये कृतवसतयो मानसं सन्निकृष्टं
नाध्यास्यन्ति व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः ॥७५॥

अपरमपि चिह्नं रम्यतामाह। वापी। अस्मिन्नागारस्योद्याने वापी दीर्घिका च अस्ति। चशब्दः पूर्वापेक्षया समुच्चये। न केवलं बालमन्दारवृक्षोऽस्ति वापी अपीत्यर्थः। कीदृशी? मरकतशिलाभिरिन्द्रनीलमणिभिर्बद्धो विरचितः सोपानमार्ग आरोहणपथो यस्याः सा तथा। तथा हैमैः सौवर्णैः स्निग्धवैदूर्यनालैः स्निग्धं चिक्कणं वैदूर्यं बालप्रवालमणिरत्नं नालं येषां तादृशैः कमलमुकुलैः पद्मकुड्मलैश्छन्ना व्याप्ता। यस्या वाप्यास्तोये जले कृता वसतिर्निवासो यैस्ते हंसास्त्वामपि प्रेक्ष्य दृष्ट्वा सन्निकृष्टं समीपमपि मानसं सरो न ध्यास्यन्ति न चिन्तयिष्यन्ति यतः व्यपगतशुचः विशेषेणापगता पलायिता शुक् शोकः क्लेशो येषां तादृशाः। घनारवाद्विग्ना हि हंसा मानसं गच्छन्तीति मानसस्मरणे यद्यपि त्वद्दर्शनमेव हेतुस्तथापि न स्मरिष्यन्ति। वाप्यामपि हेमपद्मादियोगोऽस्ति किं मानसगमनेनेन फलमिति हंसानामाशयः। मानसादप्यधिका वापीति टीकाकृत्। कमलकुसुमैरिति क्वचित् पाठः, विकचकमलैरिति च क्वचित् ॥ ७५ ॥

तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टि-
र्मूले बद्धा मणिभिरनतिप्रौढवंशप्रकाशैः ।
तालैः शिञ्जद्वलयसुभगैर्नर्तितः कान्तया मे
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥७८॥

बकुलाशोकमध्यवर्तिवक्ष्यमाणरूपमयूरावासयष्टिं चिह्नमुद्भावयन्नाह । तन्म । तयो रक्ताशोककेशरयोर्मध्ये अन्तराले, वासयष्टिर्निवासस्तम्भश्चास्ति । कीदृशी ? स्फटिकस्य फलकम् आधारभूतं चतुरस्रखण्ड यस्यास्तादृशी, तथा काञ्चनी हिरण्मयी तथा अनतिप्रौढा अचिरोत्पन्ना ये वंशा वेणवः करीरास्तद्वत् प्रकाश उद्द्योतो वर्णो येषां तैर्यन्मरकतैर्मणिभिर्मूले बद्धा कृतपिण्डिका । या वासयष्टिं, दिवसविगमे सन्ध्यायां, वो युष्माकं मेघजातीयानां सुहृन्मित्रं, नीलकण्ठो मयूरोऽध्यास्ते अधिवसति । पूर्वानुभूतस्मरणादुद्वेगमाह, कीदृशो मयूरः ? मे मम कान्तया प्रेयस्या, शिञ्जद्वलयसुभगैः क्वणत्कङ्कणमनोहरैस्तालैर्हस्ततालिकाभिर्नर्तितः नृत्यं कारितः, मत्सन्निधावित्यर्थात् । "फलकं चर्म शस्त्राग्रं यष्टेरुपरि पीठिके"ति शार्वः । काञ्चनस्येयं काञ्चनी अणः, काञ्चनान्मयडेव न तु अन् । तथाच

"पुरा दानवमुख्यानां विश्वकर्मा बभूव सः ।
तेनेदं काञ्चनमयं निर्मितं पुरमुत्तम" मिति ॥

रामायणमिति केचित् । तन्न प्रमाणम्, "पुरीं द्रक्ष्यसि काञ्चनी" मिति भट्टिः । "स काञ्चने यत्र मुनेरनुज्ञये" ति माघः । उष्यतेऽस्मिन्निति वासः; वसनं वा वासः । "यष्टिर्हारलताशस्त्रभेदयोर्वस्त्रदण्डके" इति विश्वः । "तालः कालक्रियामानं ताल-करतलध्वनि" रिति हलः । शिञ्जदिति क्वचिदात्मनेपदिनोऽपि परस्मैपदं स्यादिति शतृः । "परिष्वजन्ति पाञ्चाली मध्यमं पाण्डुनन्दन" मित्यादयो बहवः प्रयोगा दृश्यन्ते । शिञ्जेर्घञर्थे कः, तत इनिः, ततः शतृरित्यन्ये । यामिति अधिपूर्वास आधारे द्वितीया । सुहृद् इति तत्र तव मित्रदर्शनमपि भावीति ध्वनितम्, श्रान्तप्राणा स्वभावोक्तिरियम् ॥७८॥

कुम्भाकाराभिधीन् सर्वान् विलिखेच्चित्रवित्तमः ।
निजाख्याख्यापकांस्तत्र विशेषांश्च निवेशयेत्" इति ॥

इमौ तु पापनाशार्थं दुष्टसत्त्वनिवृत्त्यर्थञ्च लिख्येते । तथा च तत्रैवोक्तम्—

"शङ्खपद्मौ निधी यत्र सुरभिर्मत्तकासिनी ।
वृषभैरञ्चिता चित्रे तद्गृहं कस्मात् त्यजेत्" इति ॥

अन्यत्र चोक्तम् "शङ्खपद्मौ निधी चित्रे दृष्ट्वा दुष्टैर्विमुच्यते" इति ।

अन्ये तु यो यस्य सेवकः स तदीयचिह्नं शोभार्थं चाट्टवेश्म लिखतीति कुबेरचिह्ने लिखितावित्याहुः । च-शब्दः समुच्चये, न केवलमेभिरिमौ च दृष्ट्वा अनयोर्दर्शनेन चेत्यर्थः । अधुना नूनं मद्वियोगेन मन्दच्छाय-मित्यनेन पूर्वमलकायां मद्गृहं सर्वोत्तममासीदिति सूचितम् । एतदेवार्थन्यासेन दृढीकृतम् । खलु यस्मादित्यर्थे । वाक्यालङ्कारे इत्यन्ये । "अभिख्या नामशोभयो"रित्यमरः । हेतुस्वभावाख्यानसङ्कीर्णार्थान्तरन्यासः ॥७९॥

गत्वा सद्यः कलभतनुतां तत्परित्राणहेतोः
क्रीडाशैले प्रथमकथिते रम्यसानौ निषण्णः ।
अर्हस्यन्तर्भवनपतितां कर्तुमल्पाल्पभासं
खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम् ॥ ८० ॥

इदानीं विदितगृहस्त्वं तदीयत्राणाय अल्पशरीरीभूय ज्योतिरिङ्गणाकारविद्युद्दृष्ट्या तां निरीक्षसे इति प्रयोजनवदनुष्ठानमाह । गत्वा । प्रथमकथिते पूर्वमुक्ते, रम्यसानौ इन्द्रनीलादिमणिचितत्वात् रमणीयप्रस्थप्रदेशे क्रीडाशैले मम तन्नामख्याश्च लीलापर्वते निषण्णो विश्रामार्थमवस्थितः सन्, सद्यस्तत्क्षण गमनमात्रमेव तस्या-स्त्वन्नामख्याः परित्राणहेतो रक्षाकारणात्, कलभतनुतां करिपोतशरीरत्वं गत्वा प्राप्य खद्योताल्या ज्योतिरिङ्गण-पङ्क्त्यैव विलसितं सञ्चलभ्रमणे उन्मेषस्तन्निभां तत्सदृशीं तद्वत् शोभमानां वा, अत एव अल्पाल्पभासम् अल्पा अल्पा भाः प्रभा यस्यास्तादृशीं विद्युदुन्मेषदृष्टिं विद्युदुन्मेष एव तडित्प्रकाश एव दृष्टिस्ताम्, अन्तर्भवनपतितां गृहमध्य-गतां कर्तुं गमयितुं त्वमर्हसि युज्यसे, द्रष्टुमिति प्रकरणात् । केचित्तु प्रकरणाशयाय गत्वा सद्यः कलभतनुतां विद्युदुन्मेषदृष्टिञ्चान्तर्भवनपतितां कर्तुमर्हसीति योजयन्ति । कलभस्य करिपोतस्य तनुः शरीरं तस्य भावः कलभ-तनुता तां कलभस्येव तनुर्यस्य तद्भावमिति वा, कलभ इव तनुः क्षुद्रस्तस्य भावः कलभतनुतेत्यन्ये । ईदृशस्य महाशरीरस्य भवतो दर्शनेन सा मूर्च्छिता स्यादित्याशङ्क्यैतदुक्तम् । "करभः करिशावक" इत्यमरः । तत्परि-त्राणहेतोरिति अन्तर्भवनपतिता कर्तुमित्यत्रापि योज्यम् । रम्यसानाविति वामयोग्यत्वमुक्तम् । त्वयि करि-शावकबुद्ध्या विद्युति प्रदीपबुद्ध्या मा भयादिरहिता स्वच्छन्दं स्थास्यतीति पर्यवसितोऽर्थः । समाधिप्राणरूप-कोपमासङ्कीर्णमिदम् ॥८०॥

तन्वी श्यामा शिखरदशना पक्वबिम्बाधरोष्ठी
मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः ।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
या तत्र स्याद् युवतिविषये सृष्टिराद्येव धातुः ॥८१॥

तत्र गृहान्तर्गतस्थितस्य समीपमागतां तां तनुमध्यादिना ज्ञास्यसीति चिह्नादिवर्णनाद् । युग्मकम् । तन्वी । तत्र मद्गृहे या एवम्भूता स्यात् गम्यात्मने निर्दिष्टां तां मे मम द्वितीयं जीवितं बहिश्चरान् प्राणान् प्राणभूतां

तथा— "शार्दूलद्विपहंसगोपतिगति कुन्दाभदन्तावलिः
शस्ता वेदिविलग्नमध्यविलसच्चारुप्रभाङ्गी वधूः ।
आवर्ताभगभीरनाभिसुभगा पीनोच्चवृत्तस्तनी
स्निग्धश्यामलगौरवर्णरुचिरा पुण्यात्मना लभ्यते" ॥

तथा— "शीतोष्णकालयोरुष्णशीता मधुरभाषिणी ।
सर्वाङ्गे सुन्दरी नारी नाल्पपुण्येन लभ्यते" ॥

स्तनाभ्यां स्तोकनम्रेत्यनेन स्तनयोः सुवृत्तघनपीनता सूचिता, उक्तञ्च "वृत्तौ घनावविषमौ कठिनावुरस्था"विति । "अप्रसूताङ्गनायाञ्च श्यामा श्यामलतौषधौ । प्रियङ्गौ यमुनायाञ्च नियामायां निम्नगे"ति । हेममाली ।' "बिम्बं फले बिम्बिकायाः प्रतिबिम्बे च मण्डले" इति विश्वः । "अलसः पादरोगे स्यात् क्रमे मन्दे द्रुमान्तरे" इति च ॥ ८१ ॥

**तां जानीयाः परिमितकथां जीवितं मे द्वितीयं**
**दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।**
**गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां**
**जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम् ॥८२॥**

तां कीदृशीम् ? परिमिता अल्पा कथा वचनं यस्यास्तादृशीं मितभाषिणीमित्यर्थः । अयञ्च स्त्रीणां गुणातिशयः, विरहव्यग्रतया वा बहु वक्तुमक्षमत्वात् परिमितकथाम् । जीवितमिति स्नेहातिशयोक्तिः । सहचरे प्रिये मयि दूरीभूते विप्रकृष्टे सति चक्रवाकीमिव चक्रवाकपक्षिवधूमिव एकाम् अद्वितीयाम्; चक्रवाकस्य विरहस्य सुप्रसिद्धत्वात्तया साम्यमुक्तम् । यत्तु चक्रवाकीमिवेत्यनेन यथा रामस्य शापेन चक्रवाकयोर्विरहस्तथा यक्षेश्वरशापेनाऽऽवयोरिति ध्वनितम् । सीताविरहकाले हि रामेण चक्रवाकयोः शापो दत्त इति लोकवार्तेति व्याचक्षते, तत्तु कालिदासस्या-सम्मतत्वात् न साधु मन्यन्ते । तथाहि,—

"शशिनं पुनरेति शर्वरी दयिता द्वन्द्वचरं पतत्रिणम् ।
इति तौ विरहान्तरक्षमौ कथमत्यन्तगता न मां दहे" रित्यजविलापे ॥

अजराजकाले हि रामो न जातः । तस्मात् स्वभावादेव रात्रौ चक्रवाकयोर्विरहः । एषु आषाढश्रावणादिषु [गुरुषु] महत्सु दिवसेषु गच्छत्सु गतेषु गाढोत्कण्ठां प्रबलकामवेगाम्, गुरुतरस्मराम्, यतो बालाम् अभिनवयौवनां षोडशवर्षीयाम्, "बाला षोडशवार्षिकीति" वचः,"बालेति गीयते नारी यावत् षोडशवत्सरा" मिति नागरसर्वस्वम् । मन्ये शङ्के इदानीन्तनावस्थाया अनुमानात् । शिशिरमथिता हिमविलोडिता पद्मिनीं वा नलिनीमिव अन्यरूपां पूर्वस्मादभिन्नाकारां स्वाभाविकरूपविपरीतरूपां जाताम् उत्पन्नाम् । वा शब्द इवार्थे । "वा विकल्पोपमानयो"रिति रन्तिः । व शब्दो वा, "व शब्द उपमायां स्याद् वरुणे स्यादलंकृते"इति विश्वः । केचित्तु गाढोत्कण्ठागुरुष्विति पठित्वा प्रबलोत्कण्ठया दु गुरुष्विति व्याचक्षते । युग्मकम् ॥८२॥

**नूनं तस्याः प्रबलरुदितोच्छूननेत्रं प्रियाया**
**निश्वासानामशिशिरतया भिन्नवर्णाधरोष्ठम् ।**
**हस्तन्यस्तं मुखमसकलव्यक्ति लम्बालकत्वा-**
**दिन्दोर्दैन्यं त्वदनुसरणक्लिष्टकान्तेर्बिभर्ति ॥ ८३ ॥**

पूर्वसंस्थानमुक्त्वा चिरान्तरं प्रतिपादयन्नन्यल्लालमाह । नूनं । तस्याः प्रियायाः ईदृशं मुखं लम्बालकत्वात् सस्तचूर्णकुन्तलत्वात् लम्बालकैराच्छादितत्वात्, असकलव्यक्ति सन् असमग्रमस्ताभिव्यक्तीभावं सत्, तव अनुसरणेन उपगमनेन, क्लिष्टं ध्वस्ता अदृश्या, कान्तिः शोभा यस्य, तादृशस्य इन्दोश्चन्द्रस्य, दैन्यं शोच्यावस्थत्वं, बिभर्ति धारयति, इति नूनं शङ्के । कीदृशम् ? प्रबलरुदितेन अतिक्रन्दनेन, उच्छूने उत्फुल्ले उद्यतस्वयथुनी, नेत्रे चक्षुषी यत्र तादृशम्; तथा निश्वासानां श्वासवातानाम्, अशिशिरतया दुःखावेगोद्भुतत्वेनोष्णतया भिन्नवर्णं प्राप्तवर्णान्तरं त्यक्तलौहित्यम्, अधरौष्ठं यत्र तादृशम् ; हस्ते पाणौ न्यस्तं समर्पितम् । प्रियाया इति स्नेहाविष्कृतिः । लम्बन्ते इति लम्बाः, पचादित्वादच् । लम्बा अलका यत्र तस्या, तस्य भावस्तत्त्वं तस्मात् । लम्बालकत्वमेवम्भूतचन्द्रानुकारित्वं विरहिणीधर्मः । यदाह भरतः—

"मलिनाम्बरसंवीता मलिना लुलितालका ।
चन्द्रमूर्तिरिवाकीर्णा श्यामलाभ्रलवेन से"ति ॥

विरहिणीदैन्यमाह स एव—

"दैन्यं विरहदौर्गत्यं मनस्तापादिना भवेत् ।
निर्दिशेत्तदचेष्टायै गात्रसंस्कारवर्जनै" रिति ॥

दीनदशायामपि चन्द्रोपमयाऽत्यन्तस्पृहणीयता सूचिता । उत्प्रेक्षोपमयोः संसृष्टिरलङ्कारः ॥८३॥

**आलोके ते निपतति पुरा सा बलिव्याकुला वा**
**मत्सादृश्यं विरहतनु वा भावगम्यं लिखन्ती ।**
**पृच्छन्ती वा मधुरवचनां सारिकां पञ्जरस्थां**
**कच्चिद्भर्तुः स्मरसि रसिके त्वं हि तस्य प्रियेति ॥८४॥**

इदानीं श्लोकत्रयेण सम्भाव्यमानचेष्टाविशेषं चिह्नमाह । आलोके । ईदृशी ईदृशो वा भूत्वा स्थिता सा मम प्रिया ते तव आलोके दर्शने सति पुरा निपतति त्वामालोक्य मूर्छिता सती भूमौ गात्रं पातयिष्यतीत्यर्थः । केचित्तु पुर इति पठित्वा अग्रतो निपतति, वर्तमानं बुद्धौ निधाय लट् प्रयुक्त इति व्याचक्षते । ननु मेघदर्शनात्तस्या मूर्छा मा भूदित्येतदर्थं गत्वा सद्य- कलभतनुतामित्याद्युक्तं तत्कथं निपततीति ? मूर्छया न निपतिष्यति, किन्तु वर्षाकाले प्रियवियुक्तया मया कथं स्थातव्यमिति परितापात् । अथवैवं व्याख्येयम्, तवालोके उन्मेषदृष्टौ सा निपतिष्यति त्वद्गोचरी भविष्यति सा त्वया द्रक्ष्यते इत्यर्थः । अन्ये तु आलोके ते त्वदीयच्छायामण्डले निपतति सति संक्रामति सति सा बलिव्याकुला अर्घ्यपूजोपहारपरा भवेत् । ननु मत्स्वामिनो मित्रमसौ मेघ इत्यजानतीयं कथमभ्युत्थानं कुर्यात् ? उच्यते, अज्ञातेऽपि बान्धवे मनःप्रह्लादोदयादेवं कृतवती ; यदाह भारविः "अविज्ञातेऽपि बन्धौ हि बलात् प्रह्लादते मन" इति व्याचक्षते । केचित्तु तवालोके विद्योतरूपे पुरोऽग्रतो निपतति सति, सा मम प्रिया बलिव्याकुला स्यात्, बलिः पूजा तदर्थं व्याकुला व्यासक्ता, मत्प्रियः कुशलीभूयात् निर्विघ्नं तदागमनमस्त्वित्यादिनिमित्तम् इष्टदेवताराधनतत्परेति यावत् । बलिर्देवतापूजोपहारस्तदर्थं व्याकुला वा स्यादिति कश्चिदित्याहुः । यादृशी सा मेघेन द्रष्टव्या तादृशी "बलिव्याकुले" त्यादिना "सयोगं वा आसादयन्ती"ति पर्यन्तेन वाच्या । बलिव्याकुलेति बलिः काकबलि , तत्र व्याकुला तद्दानतत्परा प्रोषितभर्तृकादयो हि काकाय बलिं ददति । तथा च भणितं "काकस्यास्य विविक्तरस्यमनसो मा देहि मुग्धे बलि"मिति । किंवा पतिमङ्गलार्थं दुर्गायभीष्टदेवतापूजोपहारो बलि', उक्तञ्च विन्ध्यवासिना "पतिप्रत्यागमाशंसा गृहे दैवतमर्चये"दिति ।

मत्सादृश्यं मम प्रतिकृतिं लिखन्ती वा ममाकारं चित्रितं कुर्वती वेत्यर्थः। मत्सादृश्यं कीदृशम्? विरहेण या तनुता कृशता सा भावगम्या अभिप्रायबोध्या यत्र तादृशम्, आन्याहितादित्वाद् विशेषणस्य परनिपातः। किंवा, विरहे ईदृशी वल्लभस्य तनुता भूता, विरहकातराया मम यादृशी तनुता तादृशी वल्लभस्य भूतेत्येव भावो हृदयं तेन गम्यं परिच्छेद्यम् अदृष्टमपि बुद्ध्यध्यवसायेन लिखन्ती। **कौमुदीकारस्तु** भावो ह्यासनाद्यनवधानम्; यदुक्तम्, :—

"आसने शयने वापि न तुष्यति न तिष्ठति।
नित्यमेवोपतप्तः स्यादुद्वेगाद्विरही जनः"॥ इति।

आत्मनस्तनुतायनवधानेन गम्यमित्याह। **केचित्तु** विरहतनुमद्भावेति पठन्ति। **केचित्तु** विरहतनुत भावगम्यमिति पठित्वा विच्छेदकृश कथञ्चिद् प्रतीतमित्याशयस्याह, भावगम्यम् अभिप्रायवेद्यम्, आत्मनस्तनुतया अनुमानज्ञेयमिति व्याचक्षते। हे निभृते विनीते, दक्षे वा, परिपोषिते वा, कच्चित् इच्छया परिपृच्छामि, त्वं भर्तुः स्वामिनः पोष्टुः स्मरसि? इति सारिकां पक्षिविशेषं पृच्छन्ती वा। भर्तुरिति कर्मणि षष्ठी। सारिकां कीदृशीम्? मधुरवचनां मनोहरालापाम्। अत्रेदमाकूतम्, मधुरैर्वचनैर्भर्तारं वर्णयन्ती वाक्पीयूषपरैर्मम कर्णकुहरं पूरयेति। तथा पञ्जरस्थां पञ्जरः पक्षिरक्षणाधारः पिंजिरा इति खाँचा इति च ख्यातस्तत्र तिष्ठतीति डः। एतेन पाठिता वक्तुं पटुरिति सूचितम्। किमिति मयाऽसौ स्मर्तव्य इत्याह, हि यस्मात्, त्वं तस्य मत्प्रियस्य प्रिया प्रीतिकारिणी अभिलषणीया। यो यस्य प्रियो भवति स तेनावश्यं स्मर्यते इत्येतदुक्तम्। **केचित्तु** हे निभृते निःशब्दे, तूष्णींभूते, भर्तारं स्मरसि ध्यायसि, कथमन्यथा तूष्णींभूय तिष्ठसीति भावः इत्याहुः। **केचित्तु** निभृते तूष्णींभूते एतत्सम्बोधनेन किमिति पोष्टारं नाममात्रं नाह्वयसि "नाम प्रियस्य संश्रुत्य उल्लासो जायते महा"निति तत् स्मरसि, नामगुणोच्चारणं कुरुष्वेत्यर्थं इत्याहुः। निभृतेति शारिकानाम, तत्सम्बोधनमिति **केचित्**। **केचित्तु** निभृते विजनदेशे रतस्थाने त्वं तस्य प्रिया प्रीतिविषयः। अयमाशयः, तत्र तदा मया त्वया च व्यक्तसर्वाङ्गः प्रेयान् दृष्टः; अत एव तत्सादृश्यं सम्यक् लिखितं नवेति त्वां पृच्छामीतीत्याहुः।

"आलोकौ दर्शनोद्योतौ" इत्यमरः। निपतेति पुरायोगे भविष्यति क्री। "बलिः पूजोपहारे स्यात् करचामरदण्डयो" रिति **धरणिः**। सा बलिव्याकुला वेति वाशब्दोऽस्ति एवं पृच्छन्तीत्यादिविनोदप्रकारेषु वाशब्दोऽस्ति, मत्सादृश्यं विरहतनुभावगम्य लिखन्तीत्यत्र वाशब्दो नास्ति इति क्रमभङ्गो नाशङ्कनीयः; तथा हि बलिव्याकुलेति प्रथमः पक्षः, अत्र वाशब्दस्य नावश्यकत्वम्; मत्सादृश्यमित्यादीनि पक्षान्तराणि, एष्वेव वाशब्दोऽवश्यं कर्तव्यः; अत एव सा बलिव्याकुला मे आलोके निपतति मत्सादृश्यं लिखन्ती वा निपततीति योज्यम्, किंवा बलिव्याकुलेत्यस्य मत्सादृश्यमित्यस्य च मध्ये वाशब्दो द्वाभ्यां सम्बन्धनीयः। सा बलिव्याकुला मत्सादृश्य वेति केचित् पठन्ति। आलेख्यादिकिञ्च दुःखार्तस्यामकिहेतुः।

यदुक्तम्,—

"आलेख्यं कवित्वं पुनरस्य च शिरोगिरः।
प्रायो दुःखाभिभूतस्य तिस्रो विश्रामहेतवः"॥ इति।

पुनरस्य शिरोगिरिति स्नेहपात्रोपलक्षणात् शारिका ग्राह्या।

"भावः सत्ता स्वभावाभिप्रायचेष्टात्मजन्मसु।
क्रियालीलापदार्थेषु विभूतिबुधजन्मस्वि"ति॥ **मेदिनिः**।

"कचित् कामप्रवेदने" इत्यमरः। स्वभावोक्तिरियम् ॥८४॥

उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणां
मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा।
तन्त्रीरार्द्रा नयनसलिलैः सारयित्वा कथञ्चिद्
भूयो भूयः स्वयमपि कृतां मूर्च्छनां विस्मरन्ती ॥८५॥

उत्सङ्गे। हे सौम्य सुचरित्र, मलिने कृष्णे म्लाने वसने वस्त्रं यत्र तादृशे उत्सङ्गे क्रोडे वीणां वल्लकीं निक्षिप्य समारोप्य गेयं रूपकम्, उद्गातुकामा उच्चैर्गातुमिच्छन्ती, नयनसलिलैरश्रुभिरार्द्रास्तिमितास्तन्त्री कथञ्चित् सातत्यातिशयेन सारयित्वा मार्जयित्वा घातयित्वा वा भूयो भूयः पुनः पुनः, स्वयमपि आत्मनापि कृतां मूर्छनां श्वाससम्भवरागं विस्मरन्ती वा आलोके ते निपततीति सम्बन्धः। कीदृशं गेयम्? मद्गोत्राङ्कं मम गोत्रं नाम अङ्कश्चिह्नं यत्र तादृशम्, तथा विरचितपदं विशेषेण रचितं पदं शब्दो व्यवसायो वा यत्र तादृशम्। मद्गोत्राङ्कं यथा स्यात्तथा विरचितं पदं यत्रेति च व्याचक्षते। मलिनवसनत्वं विरहिणीस्वभावः। उक्तञ्च, "मलिनाम्बरसंवीते-" त्यादि। "गोत्रं नाम्नि कुले क्षेत्रे" इति विश्वः। "पदं शब्दे च वाक्ये चे" ति च। वर्णसमुदायः पदमिति **नैयायिकाः**; सुप्तिङन्तं पदमिति **वैयाकरणाः**। तन्त्रीरिति बहुवचननिर्देशेन परिवादिनीपरिवादनकौशलस्य सूचितत्वाद् वैदग्ध्यं ध्वनितम्। गेयमिति आत्मकृतं बोध्यम्। उक्तञ्चाह "आलेख्यं च कवित्वं" ति। मत्कृतमिति चाहुः। स्वयमपीति अपिशब्दो विस्मये, आत्मकृतापि विस्मर्यते इति विस्मयः। एवार्थे वा। रागाभिव्यक्तिर्मूर्छना, यदुक्तम्,—

"स्वरः सम्मूर्छितो यत्र रागतां प्रतिपद्यते।
मूर्छनामिति तामाहुः कवयः श्वाससम्भवाम्" ॥ इति।
"रागाणां या त्वभिव्यक्तिर्मूर्छना साऽभिधीयते" ॥ इति च।

अयमिहार्थः, मेघदर्शनोत्पन्नविरहवेदनापनोदनाय प्रियनामाङ्कं गेयं गातुमारब्धवती प्रियनामाङ्कोच्चारणेन च द्विगुणोत्कण्ठया रोदनमपि प्रादुर्भूतम्। विकलचित्तत्वाच्च स्वकृतमूर्छनाया अपि अपरिज्ञानमिति। इयञ्च स्वभावोक्तिः ॥८५॥

शेषान् मासान् गमनदिवसस्थापितस्यावधेर्वा
विन्यस्यन्ती भुवि गणनया देहलीमुक्तपुष्पैः।
सयोगं वा हृदयनिहितारम्भमासादयन्ती
प्रायेणैते रमणविरहे ह्यङ्गनानां विनोदाः ॥८६॥

शेषान्। गमनदिवसस्थापितस्य प्रस्थानदिनात् प्रभृति व्यवस्थितस्यावधेः सीम्नः संवत्सररूपस्य शेषान् अतिक्रान्तेभ्योऽवशिष्टान्, मासान् त्रिंशद्दिवसपरिमितकालान्, भुवि भूमौ देहल्या गृहद्वारि मुक्तैः क्षिप्तैः, पुष्पैः कुसुमैर्गणनया परिसंख्यया एक द्वि त्रि क्रमेण विन्यस्यन्ती स्थापयन्ती वा, ते आलोके निपततीति सम्बन्धः। अनेन द्वारेण प्रियः प्रस्थितोऽनेनैव प्रवेक्ष्यतीति विरहिणीभिर्देहली पूज्यते इति स्त्रीणामाचारः, अत एव सापि तां पूजयति। अत एव तत्पूजाविन्यस्तैस्ततो मुक्तैः पुष्पैर्गणयति, नाङ्गुलिरेखाभिर्विस्मरणशङ्कयेत्यर्थः। हृदये निहितः आरोपितः आरम्भः प्रक्रमो यस्य तादृशं सयोगं मम सङ्गम् आसादयन्ती प्राप्नुवती वा, ते आलोके निपततीति सम्बन्धः। तादृक् सयोगस्तु सुखप्रमादादिना मेघेनावधार्य, अन्यथा तस्यानुपलम्भात्। कथमेवमवस्थ

सा करिष्यतीत्याशङ्क्य विरहिणीस्वभावमर्थान्तरन्यासेनाह, हि यस्मात्, प्रायेण बाहुल्येन रमणविरहे कान्तविश्लेषे अङ्गनानां स्त्रीणाम्, एते उक्तप्रकारा विनोदाः क्रीडाप्रकाराश्चित्तावलम्बनस्थानानि भवन्ति। तथाचोक्तम् —

> 'देवतापूजनं कुर्यात् कुर्याद्वा निभृते बलिम्।
> लिखेत् कान्तप्रतिकृतिं पाठयेच्छुकसारिकाम्॥
> वादयेच्च तथा वीणां गायेद् गीतं तदङ्कितम्।
> गणयेत् सावधिदिनं तिष्ठेत् सङ्कल्पसङ्गमे॥
> एवंविधैर्विनोदैस्तु रमणेन विनाऽबला।
> विनयेच्च व्यथां तीव्रां सङ्गमाशावलम्बनात्'' ॥ इति।

रमणेति युक्तपदोपन्यासः। रमते रमयति वेति व्युत्पत्ते, न हि दुर्भगाविरहे एतादृग् भवति। केचित्तु विरहे ष्वङ्गनानामिति पठित्वा विरहेष्विति बहुवचनं विरविरहसूचकम्। अङ्गनानां बहुत्वाद्बहुवचनमिति व्याचक्षते ॥८६॥

**सव्यापारामहनि न तथा पीडयेन्मद्वियोगः**
**शंके रात्रौ गुरुतरशुचं निर्विनोदां सखीं ते।**
**मत्सन्देशैः सुखयितुमलं पश्य साध्वीं निशीथे**
**तामुन्निद्रामवनिशयनासन्नवातायनस्थः ॥८७॥**

इदानीमुक्तचिह्नैर्निर्णीतकान्ताजनं मेघं दर्शनायोपदिशन्नाह। पञ्चभिः श्लोकैरादिकुलकम्। सव्या। शङ्के तर्कयामि, मद्वियोगो मम विरहः अहनि दिवसे तथा तेन प्रकारेण अत्यर्थं ते तव सखीं मत्प्रियां न पीडयेत् नार्दयेत् यथा येन प्रकारेण रात्रौ पीडयेत्। कथं नाहनि तत्रेत्याह सव्यापाराम्, व्यापारो गृहकृत्यं पूर्वोक्तविनोदो वा, तेन सह वर्तमानाम्। कथं रात्रौ पीडाधिक्यमित्याह, तत्र हि निर्विनोदां विनोदो बलिदानादिस्तद्रहिताम् अत एव तत्र गुरुतरा दिवसापेक्षया महती शुक् शोको यस्यास्तादृशीम्, अत एव निशीथे अर्धरात्रे मत्सन्देशैर्मम वाचिकैस्ताम् उद्विग्नां तव सखीम् अलमत्यर्थं सुखयितुं प्रीणयितुं पश्य द्रक्ष्यसि। कथं निशीथे परस्त्रियं पश्यामि कदाचित् मदनाभिमतिस्खलनं स्यादित्याह, साध्वीं सुचरित्रां पतिव्रताम् "सती साध्वी पतिव्रते" इत्यमरः। कदाचित् तत्समयं निद्राणा स्यात् तत् कथं पश्यामीत्याह, उन्निद्रां त्यक्तनिद्राम्, उन्निद्रत्वं गुरुतरशुचमिति हेतुः। उद्वेगावस्था चोन्निद्रत्वं तासां त्वमुन्निद्रामाह, त्वं कीदृशः सन् द्रक्ष्यसि? अवनिशयनासन्नवातायनस्थः सन्, अवनिरेव भूमिरेव शयनं शय्या तस्याऽऽसन्नं सन्निहितं यत् वातायनं गवाक्षस्तत्र स्थितः सन्। एतेन वातायनस्थितिरो भूमिशयनस्य दर्शनेन विरहवेदनातिशयबोधात्तां ज्ञास्यसीति सूचितम्। विरहिणी हि शय्यां विहाय भूमौ शेते सन्तापात्; तथा च,—

> "आसने शयने वापि न तिष्ठति न तुष्यति।
> नित्यमेवोपतप्तः स्यादुद्वेगी विरही जनः ॥ इति।

गुरुतर इति अयर्थेऽत्र। केचित्तु गुरुस्तरो निस्तरणं यस्यास्तादृशो शुक् यस्या इत्याहुः। सखीमिति प्रीतिप्रतिपादनम्, कान्तो द्रक्ष्यसि भ्रातृजायामित्यनेन न विरोध इति बोध्यम्। पश्येत्यस्य परत्र श्लोकचतुष्टयेऽपि सम्बन्धः।

ननु विद्युदुन्मेषदृष्ट्या तां जानीया इति प्रागेव तद्दर्शनमुक्तं तत् किं पुनः पश्येति ? उच्यते, पश्येति लोकोक्त्या यत्नवाचकमेवेति । **कौमुदीकारस्तु** जानीया इति ज्ञानमात्रमुक्तम्, पश्येति साक्षादालोक इत्याह । **केचित्तु** यस्येति पठित्वा तां सुखयितुं यस्य यत्नं [ कुरु ? ] यसु प्रयत्ने दिवादित्वात् यन्, हेर्लुगिति व्याचक्षते । अपरे तु सौम्येति पठित्वा हे सौम्य, तां सुखयितुमलं समर्थस्त्वमिति व्याचक्षते । निशीथग्रहणं जनप्रवादपरिहारार्थम् । उन्निद्रामित्यनेन प्रबोधनायायासो न भवतीति सूचितं विरहातिशयश्च । तथा च **भरतः** :—

"निद्राच्छेदोऽङ्गदौर्बल्यं वर्णपाण्डुत्वमेव च ।
सन्तापो दीर्घनिश्वासः स्त्रीपुंसोर्विरहे समाः" ॥ इति ।

जातिरलङ्कारः ॥ ८७ ॥

**आधिक्षामां विरहशयने सन्निकीर्णैकपार्श्वां**
**प्राचीमूले तनुमिव कलामात्रशेषां हिमांशोः ।**
**नीता रात्रिः क्षणमिव मया सार्धमिच्छारतैर्या**
**तामेवोष्णैर्विरहजनितैरश्रुभिर्यापयन्तीम् ॥८८॥**

इदानीं पञ्चभिः श्लोकैरेतस्या अवस्थामाह । आधि । इत्थमित्थम्भूतां पश्येति सम्बन्धः । कीदृशीम् ? आधिक्षामाम् आधिर्मानसी व्यथा तेन क्षामां कृशाम् । कार्श्यावस्थेयम्; यदुक्तं,—

'चक्षूरागस्तदनु मनसः सङ्गतिर्भावना च
व्यावृत्तिः स्यात्तदनु विषयाभ्यासतश्चेतसोऽपि ।
निद्राच्छेदस्तदनु कृशता निस्त्रपत्वोन्मदत्वे
तस्मान्मूर्च्छा तदनु मरणं स्युर्दशाः प्रक्रमेणे'ति ॥

क्षामत्वेनाभिलाषावस्था वा, यदाह **भरतः**,—

"प्रथमा त्वभिलाषः स्याद् द्वितीया गुणकीर्तनम् ।
अवस्था कथिता सा तु तृतीया चानुचिन्तितम् ॥
परिदेवितं चतुर्थं तु ( ? ) पञ्चम्युद्वेगलक्षणा ।
अनुस्मृतिस्तु षष्ठी स्यात् सप्तमी जडता मता ॥
उन्मादाख्या चाष्टमी स्यान्नवमी व्याधिसंज्ञिता ।
मरणाख्या तु दशमी दशावस्था वियोगिनाम् ॥" इति ।
"अन्योन्यस्याभिलाषेण जायते तनुतापि च" ।

तथा विरहशयने भवनस्थायामास्तीर्णभूशय्यायां, सन्निकीर्णं सम्यक् निक्षिप्तम् एकं पार्श्वं यया ताम्, विस्मृतगतपार्श्वान्तरपरिवर्तनामित्यर्थः । एतेन विषयान्तरव्यावृत्त्या चतुर्थीयमवस्था । उक्तार्थमेव द्रढयितुं दृष्टान्तमाह, प्राचीमूले पूर्वदिगन्ते कलामात्रशेषाम् एककलावशिष्टां हिमांशोश्चन्द्रस्य तनुमिव मूर्तिमिव । कृष्णचतुर्दश्यां हि प्राचीमूले चन्द्रकला दृश्यते । कलामात्रशेषामित्यनेन विरहवेदनया कण्ठागतप्राणां मत्सन्देश-कथाकौतुकेन जीवयेति सूचितम् । तथा, या रात्रिर्मया सार्धं सह, इच्छारतैर्वाञ्छानुरतैरभीप्सुपरायितचित्रबन्ध-पार्श्वलोठनरतादिभिः क्षणमिव नीता गमिता सुखानुभवेन बहुकालस्याल्पत्वबुद्ध्या अदणात्, तामेव रात्रिं

विरहजनितैर्विच्छेदोत्पादितैरत एव उष्णैरशीतलैरश्रुभिर्नेत्रजलैर्यापयन्तीं प्रेरयन्तीम्। यापनं कालहरणमुच्यते इति वृद्धाः। एतेन विरहयातनया रात्रेर्दैर्घ्यं सूचितम्। उक्तञ्च, "उन्निद्राया रुदत्याश्च रात्रिर्वर्षशतोपमे" ति। एतेन निद्राच्छेदरूपा दशा दर्शिता। क्षणमिति लोकोक्त्या अल्पकालोपलक्षणम्।

यद्यप्यमरकोषादौ "तास्तु त्रिंशत् क्षण" इति क्षणशब्दस्य पुंस्त्वं दृष्टं तथापि "क्षणमिव गमितो वासरो वासरेणे"ति "नीता रात्रिः क्षणमिव मये"त्यादिप्रयोगदर्शनात् क्षणशब्दोऽर्धर्चादौ पठनीय इति कलिङ्गः। क्षण इवेति युक्तः पाठ इति शर्थः। तामिति सादृश्यदर्शनाल्लोकोक्त्या,

"यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः।

"स एव वर्षासमयः समागत" इत्यादिवद्बोध्यम्। जात्युपमासंकीर्णमिदम्॥८८॥

**निश्वासेनाधरकिशलयक्लेशिना विक्षिपन्तीं**
**शुद्धस्नानात् परुषमलकं नूनमागण्डलम्बम्।**
**मत्सम्भोगः कथमपि भवेत् स्वप्नजोऽपीति निद्राम्**
**आकांक्षन्तीं नयनसलिलोत्पीडरुद्धावकाशाम्॥८९॥**

निश्वा। पुनः कीदृशीं ताम्? नूनं निश्चितं सम्भावयामि वा, ऋतुशुद्ध्यर्थस्नानाद्धेतोः निश्वासेन नासापुटनिर्गतेन वायुना अलकं चूर्णकुन्तलं विक्षिपन्तीं विकीर्णयन्तीम् इतस्ततः प्रापयन्तीम्। शुद्धमिति भावेक्तः। ऋतुस्नाता हि रागवती भवति। अत एव निश्वासोष्णताप्राबल्यातिकष्टदायित्वमाह। कीदृशेन निश्वासेन? अधरकिशलयक्लेशिना अधर एव कोमलारुणत्वाभ्यां किशलयो नवपल्लवस्तं क्लिश्नाति पीडयतीति णिनि; अधरकिशलयस्य क्लेशः शोषवैवर्ण्यविदीर्णत्वात्। अलकं कीदृशम्? शुद्धस्नानात् परुषं शुद्धाय ऋतौ शुद्धाय गन्धामलकादिशून्यं वा यत् स्नानं तस्मात् रूक्षम्, तथा आगण्डलम्बं गण्डस्थलगामिनं वर्तनतैलमार्जनाद्यभावात्। आगण्डं गण्डस्थलपर्यन्तं लम्बते लुठतीति पचादित्वादच्। पुनः कीदृशीं ताम्? मत्संयोगो मया सह समागमः स्वप्नजोऽपि निद्रासम्भवोऽपि कथमपि केनापि प्रकारेण भवेत् इति हेतोर्निद्राम् आकांक्षन्तीं काममानाम्, अस्या निद्रैव नास्ति नापि समयप्राप्तां निद्रामभिलषति मम सङ्गमाशया निद्रामभिलषतीत्यर्थः। निद्राकांक्षा तु क्षणं क्षणं निमीलनोन्मीलनाल्लक्ष्यते। निद्रां कीदृशीम्? नयनसलिलोत्पीडेन रोदनजलोत्पीडनेन, रुद्धोऽवकाशो यस्यास्ताम् बहुव्रीह्यन्तर्गतोत्प्रेक्षेयम्। विरहज्वरान्नायान्ती निद्रा निरवकाशत्वेनेव नागच्छतीत्युत्प्रेक्ष्यते। अन्ये तु नयनसलिलस्य नेत्रजलस्य उत्पीडेन प्राचुर्येण समूहेन रुद्ध आवृतोऽवकाशोऽवलोकनविषयो यस्याः सा तथा ताम्; नायिकाविशेषणमिदमित्याहुः। शुद्धस्नानादित्यस्य निश्वासेनेत्यनेन परुषमित्यनेन च काकाक्षिगोलकन्यायेन सम्बन्धो बोध्यः। प्रोषितभर्तृकाणामृतुस्नाने दुःखनिश्वासो भवत्येव। तथा च;—

"ऋतुस्नाताः सनिश्वासं स्मरन्ति गतभर्तृकाः।
कान्तमत्यन्तसञ्जातमदनावेदाविक्लवाः॥"इति।

*विरहिण्या अलकपरुषत्वादिकं युक्तमेव; तथा च,—*

"न भूषणं नैव मृजा नालकानाञ्च कर्तनम्।
नानुलेपं न सत्कारं कुर्वन्ति प्रोषिते पतौ॥" इति।

एवं विरहिण्या विनिद्रत्वमश्रुपूर्णनेत्रत्वञ्च भवत्येव। तथा, "विनिद्रा बाष्पपूर्णाक्षा गमयन्ति निशाश्च ता"इति।

मत्सङ्गमोऽग इत्यादिना मत्सङ्गभावनारूपे द्वे अवस्थे उक्ते, आकाङ्क्षन्तीमित्यनेन प्रथमावस्थोक्ता, "प्रथमा त्वभिलाषः स्या" दित्युक्तेरिति शर्व । जातिहेतूत्प्रेक्षासङ्कीर्णमिदम् ॥ ८९ ॥

आद्ये बद्धा विरहदिवसे या शिखादाम हित्वा
शापस्यान्ते विगलितशुचा या मयोद्वेष्टनीया ।
स्पर्शक्लिष्टामयमितनखेनासकृत् सारयन्तीं
गण्डाभोगात् कठिनविषमामेकवेणीं करेण ॥९०॥

आद्ये । पुन कीदृशीं ताम् ? आद्ये प्रथमे, विरहदिवसे विच्छेददिने, या एकवेणी शिखादाम चूडामणिं हित्वा त्यक्त्वा दूरीकृत्य बद्धा, एव या एकवेणी, शापस्य वर्षविरहरूपस्य अन्ते अवसाने, विगलितशुचा विगतशोकेन सता मया उद्वेष्टनीया मोचनीया ताम् एकवेणीं केशरचनाविशेष करेण हस्तेन गण्डाभोगात् कपोलमण्डलात् असकृत् वारवार सारयन्तीं स्वस्थान नयन्तीम् । करेण कीदृशेन ? अयमितनखेन असंस्कृतनखेन शुचीभावाद्यभावात् । अयमितेति पाठे अयमिता संस्काराभावात् अछेदितायमाना नखा यत्र तादृशेन, विरहिण्या आचारोऽयम् । यदुक्तम्, "संस्कार नखकेशादेर्न कुर्यात् प्रोषिते पता' विति । एकवेणीं किम्भूताम् ? स्पर्शे अङ्गसङ्गे क्लिष्टां क्लेशदायिनीम्, किंवा स्पर्शेन घर्षणेन क्लिष्टां क्षीणाम्, तथा कठिनविषमा कठिना रूक्षा चासौ विषमा तिर्यग्भूता चेति सा तथा तादृशीम्, तैलादिसंस्काराभावात् । उद्वेगावस्थेयम् । "चूडामणि शिखादामे' ति शार्वः । शिखादाम चूडास्रजमिति च व्याचक्षते । पुष्परचितचूडामणि शिखादाम, 'पुष्पचूडामणिर्धीरै शिखादामेति कीर्त्यते ' इति रन्तिरिति केचित् । कुसुमबन्धनी केशलता शिखा, तत्र दाम माल्यमिति कौमुदी । या मयोद्वेष्टनीयेत्यनेनावश्यद्रष्टव्यच वेण्या ध्वनितम् । गण्डाभोगात् परिपूर्णतायुक्तगण्डादित्यर्थ, "आभोग परिपूर्णते" त्यमर । एकीकृत्य बद्धा वेणी एकवेणी, ननु केशसमुदायस्यैकभूता वेणी, तस्या अन्यव हारात् । किंवा एका प्रशस्ता वेणी एकवेणी, तथा च रन्ति, "केवलश्रेष्ठयोरेकमपरस्मिन्नपि त्रिषि' ति ।

सा सन्यस्ताभरणमबला पेलव धारयन्ती
शय्योत्सङ्गे निहितमसकृद् दु:खदु:खेन गात्रम्।
त्वामप्यस्रं नवजलमयं मोचयिष्यत्यवश्य
प्राय. सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा ॥९२॥

सा। सन्यस्ताभरण सन्यक्तालङ्कारम् अवन्ताधन वोढुमक्षमत्वात् द्वेषाद्वा, तथा पेलव कोमलम्, तथा शय्याया उत्सङ्गे क्रोडे, असकृत् पुन पुनर्निहित निक्षिप्तम्। ननु सा यद्येवमतिदु:खिता किमेतावतैव ममाश्रुपातो भविष्यतीत्यर्थान्तरन्यासमाह, प्रायो बाहुल्येन, आर्द्र स्निग्धोऽन्तरात्मा क्षेत्रज्ञो यस्य, तादृश सर्व समस्त एव जन, करुणया कृपाया वृत्ति' प्रवर्तन यस्य तादृशो भवति, त्वमपि आर्द्रान्तरात्मा सजलत्वात् स्तिमिताभ्यन्तर। पेलवमित्यनेन शय्योत्सङ्गे निहितमपि कोमलत्वात् केयूराङ्गदादिना पीडित भवतीति सूचितम्। पेलवमित्यत्र क्वचित् पेशलमिति, क्वचिच्च कोमलमिति पाठ। असकृदित्यनेन विरहवेदनया कदाचिदुत्तिष्ठति कदाचित् पततीति सूचितम्। त्वामपीति ईदृगवस्था अन्यानपि दयालून् अश्रु मोचयतीत्यपेरर्थ:। नवजलमयमित्यत्र नवजलकणमिति पाठ नवजलबिन्दुस्वरूपमश्रु, जलकणमयमिति च क्वचित् पाठ। उद्वेगावस्थेयम्; तथा च, "चिन्तानिश्वासखेदार्तैरुद्वेगो नाम जायते" इति। सन्यस्ताभरण वनानुस्मृत्यवस्था चोक्ता, तथा च, 'विद्वेषा दन्यकार्याणामनुस्मृतिरुदाहृते' ति। दु:खदु:खेन गात्रमित्यनेन व्याध्यवस्थाप्युक्ता, तथा च,—

"क्षुभ्यति हृदय प्रदहत्यङ्ग शिरसश्च वेदना तीव्रा।
नच धृतिमप्युपलभते व्याधावेवं वियोगिनी नारी' ति॥
जातिश्लेषकरलेषगर्भोऽर्थान्तरन्यास ॥ ९२॥

जाने सख्यास्तव मयि मन सम्भृतस्नेहमस्मा-
दित्यम्भूता प्रथमविरहे तामह तर्कयामि।
वाचाल मा न खलु सुभगम्मन्यभाव करोति
प्रत्यक्ष ते निखिलमचिराद् भ्रातरुक्त मया यत् ॥९३॥

ननु वैक्लव्येन त्वमेव ब्रवीषि सा तु पुरुषान्तर गतैव, यदुक्त "प्रायेण भूमिपतय प्रमदा लताश्च य पार्श्वतो वसति त परिवेष्टयन्ती त्याशंक्याह। जाने। हे भ्रातर्मेघ, तव सख्या मत्कान्ताया मयि मद्विषये सम्भृत स्नेहम् उपचितप्रेम मनश्चित्तम् अस्मादत कारणादह जाने वेद्मि। किंवा मनसा सम्भृत सम्यग् धृत स्नेह जानामि, यत प्रथमविरहे पूर्वाननुभूतविश्लेषे इत्थम्भूताम् उक्तप्रकारप्राप्तां तामह तर्कयामि अवधारयामि। कदाचिदसम्बद्धप्रलापेनेवमाविष्करोतीत्याह सुभगम्मन्यभाव। असुमेवार्थं द्रढयन्नाह यत मया उक्त कथित, तत् निखिल सर्वम् अचिरात् शीघ्रमेव सम्प्रत्येव, प्रत्यक्ष गमनमात्रेणानुभवसिद्धं, भविष्यतीत्याक्षेपात्। सख्या इति प्रेमपात्रोपलक्षणम्। तत भ्रातरिति सम्बोधनम्। प्रथमति आद्यविरहे यादृक् सुदु:सहदु:खम् आवृत्ते विरहे तादृक् दु:खाभाव इति प्रथमग्रहणम्। खलु निश्चये वाक्यालङ्कारे वा। आत्मान सुभग मन्यते इति सुभगम्मन्य, "खश्चात्ममनने इति ख, तस्य भाव स तथा। सुभग मन्युभाव इति पाठे मन्यु शोको विरहयतनत्वर्थ, तस्य भाव सत्ता, सुभग प्रेयास मा, वाचाल करोति, सुभगतया नैव मन्ये मौल्यर्थ। सुभग सत्यवादिनम्, शोकवानयह सत्य वदामीत्यर्थ: इत्यन्ये। अचिरादिति शाघ्रगमने हेतु। हेतुरलङ्कार ॥९३॥

इदानीं प्रहरप्रतीक्षानन्तरं यत् कर्तव्यं तदुपदिशन्नाह । ताम् । धीरध्वनितवचनैर्मन्दगर्जितरूपवाक्यै स्ता मानिनीं मानवतीं मत्कान्ताम् उत्थाप्य प्रबोध्य, त्वं वक्तुं कथयितुं प्रक्रमेथा आरभस्व । शोकसन्तप्ता कथं बोध्यतीत्याह, स्वजलकणिकाशीतलेन निजतोयलवशिशिरेण, अनिलेन वातेन अभिनवैर्नूतनैर्विकाशोन्मुखै र्मालतीनां जातीनां जालकैः कोरकैः, समं सह, प्रत्याश्वस्तां मुक्तखेदाम् । गृहान्तर्गतां विदूरवर्तिनीम् अनवधानां कथं पश्यामीत्याह त्वत्सनाथे, त्वया ससहाये अधिष्ठिते, गवाक्षे वातायने, विद्युत्कम्पस्तिमितनयनां विद्युत् कम्पेन चलनेन स्तिमिते निश्चले नयने लोचने यस्यास्तादृशीम् । उत्थाप्येत्यत्र वक्तुमित्यत्र च धीरध्वनितवचनै रित्यस्य सम्बन्धो बोध्यः । स्वजलकणिकेत्यादिना यथा जलकणिकाशीतलाल्पवातेन मालतीजालक प्रत्या श्वसिति तथा तदनुरूप वातस्पर्शमनुभूय नाधिकमिति सूचितम्, किञ्च मालतीजालकवत् सौकुमार्यमस्या इति । किञ्च मालतीनिकुञ्जवेष्टितं किल तदायतनं बोध्यमिति । अन्येषामपि त्वं सदुपकारी यथा मालतीनामिति । ननु नवो वातो विरहिदुःखदः, उत्थानेनापि मेघालोके भवति दुःखिनी इत्यादि, तत् कथं तेन प्रत्याश्वासोऽस्याः ? प्रियागमप्रत्याशया आश्वासो बोध्यः । उत्थानेनैव प्रत्ययादाश्वसत्य इति । किंवा पूर्वानुभूतवासनयोक्तम्, पूर्वं हि रतिक्लान्तिशान्तिः शीतलवातेन जनिता । विद्युत्कम्पस्तिमितनेत्रत्वं तदभिमुखत्वेन । प्रबलगर्जितेन चमत्कृतिः स्यादित्युक्तं धीरध्वनितवचनैरिति । "धीरो धैर्यान्विते मन्दे" इति धरः । हे धीर सावधानेति सम्बो धनं वा । धीरस्तनितवचनैरिति क्वचित् पाठः । धीरध्वनितवचन इति पाठे मन्दगर्जितवाक्यः सन् त्वम् । धीर ध्वनितवचनमिति पाठे क्रियाविशेषणम् । मानिनीमिति, "मानश्चित्तसमुन्नतिः" स नित्यमतिशयितो वा विद्यतेऽस्या इति इन् । सा हि मानशालिनीत्वात् सखास्वल्पैकमपि न सहते, अतोऽवधानेन वदिष्यसीत्या कूतम् । "मानश्चित्तोन्नतौ ग्रहे" इति विश्वः । मानपूजायामित्यतो घञि मानः पूजा, तद्युक्तां मानिनीं पतिव्रतात्वात् पूज्यामित्यर्थः इति च व्याचक्षते । 'प्रक्रमेथा इति प्रोपाभ्यारम्भे' इत्यात्मनेपदम् ॥९७॥

भर्तुर्मित्रं प्रियमविधवे विद्धि मामम्बुवाहं
तत्सन्देशान्मनसि निहितादागतं त्वत्समीपम् ।
यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानां
मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि ॥९८॥

"न तस्य ग्राम्यता यस्तु शब्दः स्याल्लोकसम्मतः ।
भगिनी भगवतीत्यादि सर्वत्रैवानुमन्यते" इति ॥

विद्धि मामित्यत्र तमिति गम्यते यत्तदोर्नित्यसम्बन्धात् । तत्सन्देशादिति हेतौ पञ्चमी, किंवा यबर्थे, तत्सन्देशं संगृह्येत्यर्थः । मनसि निहितादित्यनेन तेन यद्यदुक्तं तन्मनसि यत्नेन धृतं तत्प्रियत्वात्, न तु विस्मृतमिति सूचितम् । यो वृन्दानीत्यादिना प्रोषितभर्तृकाणामहमुपकारी, त्वामपि संवादेनोपकरिष्यामीति सूचितम् । केचित्तु, पथि श्राम्यतां विश्रामं कुर्वताम्, उपसर्गं विनापि श्रमेर्विश्रामार्थतेत्याहुः । मन्द्रस्निग्धैरित्यनेन कामोद्दीपकता सूचिता । कान्ते प्रोषिते स्त्रीभिर्वेणी बध्यते प्रवासादागत्य कान्तेनैव सा मोक्ष्यते इति अबलावेणिमोक्षोत्सुकानीत्युक्तम् । प्रेयोऽलङ्कारः, यदुक्तं, 'प्रेयः प्रियतराख्यान' मिति ॥९८॥

इत्याख्याते पवनतनये मैथिलीवोन्मुखी सा
त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्य सम्भाव्य चैव ।
श्रोष्यत्यस्मात् परमवहिता सौम्य सीमन्तिनीनां
कान्तोदन्तः सुहृदुपगतः सङ्गमात् किञ्चिदूनः ॥९९॥

असम्भावनामिथ्याज्ञानेन सा किमनवधाना भविष्यतीत्याह । इत्या । हे सौम्य सच्चरित, इत्येव भर्तुर्मित्रमित्यादिना प्रकारेण, आख्याते उक्तवति, प्रकृतत्वात् त्वयि, उन्मुखी ऊर्ध्वमुखी त्वदभिमुखमुन्नमितवदना सती, *उत्कण्ठोच्छ्वसितहृदया उत्कण्ठया उत्कलिकया उद्वेगेन उच्छ्वसितमुल्लसितं हृदयं चित्तं यस्यास्तादृशी* सा मत्कान्ता त्वां वीक्ष्य विशेषेणावलोक्य, सम्भाव्य स्वागतं भवत इत्यादिना आलप्य च, अस्मात् प्रत्यक्षीभूताद् भवतः, परमत्यर्थम् अवहिता सावधाना सती, श्रोष्यति त्वदुच्यमानवार्तामित्यर्थः । यथा पवनतनये हनूमति विषये, उन्मुखी उत्कण्ठोच्छ्वसितहृदया मैथिली सीता शुश्राव अर्थात् रामवार्ताम् । कथमेवमस्य भविष्यतीत्याह, सीमन्तिनीनां स्त्रीणां सुहृदा बन्धुना, उपगत आनीतः, कान्तोदन्तः प्रियवार्ता, सङ्गमात् सम्मिलनात् किञ्चिदूनः अल्पहीनः सङ्गमप्राय इत्यर्थः । आख्यात इति आरम्भे कर्तरि क्तः । किंवा कर्मणि-क्तः; इति पूर्वोक्ते आख्याते त्वया उक्ते सतीति योज्यम् । पवनतनयमिति पठित्वा हनूमन्तं वीक्ष्य सम्भाव्य च मैथिलीवेति व्याचक्षते केचित् । चैव शब्दौ समुच्चयावधारणार्थौ । अस्मात् परं सम्भाषणादनन्तरमिति च व्याचक्षते । सौम्यसीमन्तिनीनामिति समस्तं सुचरितस्त्रीणामिति च व्याचक्षते । श्लेषोपमागर्भार्थान्तरन्याससङ्कीर्णमिदम् ॥९९॥

तामायुष्मन् मम च वचनादात्मनश्चोपकर्तुं
ब्रूया एवं तव सहचरो रामगिर्याश्रमस्थः ।
अव्यापन्नः कुशलमबले पृच्छति त्वां वियुक्तां
भूतानां हि क्षयिषु करणेष्वाद्यमाश्वास्यमेतत् ॥१००॥

सन्देशं मे तदनु जलद श्रोष्यसीति यदुक्तं तदवसरप्राप्तं कथयन्नाह । तामा । हे आयुष्मन् दीर्घजीविन्, मम च आत्मनश्च, वचनात् वाक्यात्, तां मत्कान्ताम्, उपकर्तुम्, एवमित्थं वक्ष्यमाणप्रकारेण, तां त्वं ब्रूयाः कथयिष्यसि । किमेव वक्ष्यामीत्याह, हे अबले योषित्, तव सहचरः प्रियो रामगिर्याश्रमे स्थितोऽव्यापन्नः कुशली, वियुक्तां वियोगिनीं त्वां कुशलं पृच्छति । कुशलप्रश्ने हेतुमाह, हि यत , भूतानां प्राणिनां, क्षयिषु नश्वरेषु, करणेषु शरीरेषु, एतत् कुशलम् आद्यं प्रथमम्, आश्वास्यम् आश्वासनीयम् अवधारणीयम्, जीवने सति सङ्गमादिक

रुद्धापाङ्गप्रसरमलकैरञ्जनस्नेहशून्यं
प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम् ।
*त्वय्यासन्ने नयनमुपरिस्पन्दि शङ्के मृगाक्ष्या*
मीनक्षोभाकुलकुवलयश्रीतुलामेष्यतीति ॥ ९४॥

इदानीं श्लोकद्वयेन प्रियशुभवार्तालाभसूचकं शकुनमाह । रुद्धा । त्वयि आसन्ने निकटस्थे सति, तस्या मृगाक्ष्या हरिणलोचनाया नयनं चक्षुः, उपरिस्पन्दि ऊर्ध्वं स्पन्दिष्यमाणं सत्, मीनक्षोभाकुलकुवलयश्रीतुलामेष्यति मीनस्य मत्स्यस्य क्षोभेण सङ्घट्टनेनाकुलं व्याकुलं चञ्चलं यत् कुवलयं नीलोत्पलं तस्य या श्रीः शोभा तस्यास्तुलां सादृश्यं प्राप्स्यति ; इत्यहं शङ्के सम्भावयामि । नयनमिह प्रियनिवेदकत्वाद्वाममेव गम्यम्, एवं तस्या इत्यर्थादवगम्यम् । किंवा 'वामश्चास्याः' इति वक्ष्यमाणश्लोकेन सम्बन्धादस्या वामं नयनं वाम ऊरुश्चेति सम्बन्धनीयं [इति] व्याख्येयम्, सद्व्याख्यानमिदम्, अस्या इत्यस्य इति शङ्के इत्यस्य च द्वयोः सम्बन्धात् । उपरिस्पन्दे हेतुमाह, किम्भूतं नयनम् ? अलकैश्चूर्णकुन्तलैः, कर्तनशून्यत्वात् रुद्धोऽपाङ्गतोऽपाङ्गे नेत्रान्ते प्रसरो गमनं यस्य तथाभूतम्; तथा अञ्जनस्नेहशून्यं कज्जलस्निग्धतारहितम् । विरहिणीस्वभावोऽयम् । भ्रूविलासादेव स्पन्दनमित्याशङ्क्याह, मधुनो मद्यस्य प्रत्यादेशात् निराकरणात् परित्यागात् चिरमसेवनादपि च, विस्मृतो भद्रो मद्यस्य भ्रूविलासो भ्रूवैदग्ध्यं येन तादृशम् । अपिचेति समुच्चये । मधुसेवनाभावाद्विरहाच्च विस्मृतभ्रूविलासमिति भावः । शङ्कितेयं दृष्टिः, तथा च,—

'क्वचिच्चला स्थिरा शून्या क्वचित्तिर्यग्विलोकिनी ।
*अनवस्थिततारा च शङ्किता दृष्टिरुच्यते'*॥ इति ।

अत्र च स्पन्दनेन चलत्वम् अलकरुद्धप्रसरापाङ्गत्वेन तिर्यग्विलोकिनीत्वम् अनवस्थिततारकत्वञ्च, विस्मृतभ्रूविलासत्वात् भ्रुवोरव्यापारेण स्थिरत्वं ध्वनितम् । अञ्जनस्नेहशून्यमित्यनेन शून्यत्वञ्च स्पष्टम् । कुवलयश्रीतुल्या सादृश्यमपि चक्षुः कमनीयमेवेति सूचितम्, स्त्रीणां वामचक्षुःस्पन्दनं शुभसूचकम् । यदुक्तं, "सव्यनेत्रं स्फुरत् स्त्रीणां ददाति प्रियसङ्गम"मिति ।

"नखशतानि पश्यन्त्या गूढस्थानेषु योषितः ।
चिरस्मृतेरभिनवा प्रीतिर्भवति पेशले"ति च ॥

नखक्षतमिह रतिसमयदत्तं वा, तदन्य तत् स्यान्मम, "कक्षाकरोरुजघनस्तनपार्श्वशुष्पहृत्कन्धरासु नखरक्षतमाहुरेव"मिति । तथा दैवगत्या दैववशेन, चिरपरिचितं चिरकालसेवितं बहुकालधारितं मुक्ताजालं जालाकारग्रथितमौक्तिकसमूहविरचितमुक्तासराभिधाभरणं मौक्तिकसमूहं वा, त्याजितः मोचितः दूरं कारितः । त्यजेर्णिगत्यर्थत्वात् प्रयोज्यस्य कर्मत्वम्, कर्मणि क्तश्च । तथाच, सम्भोगान्ते रतावसाने, मम हस्तसंवाहनानां खेदापनयनाय करमर्दनानां समुचितो योग्यः, हस्तसंवाहनाद्यैरिति पाठे करमर्दनादिभिः समुचितः समवेतः सङ्गतः, हस्तसंवाहनाभिरिति पाठे च समुचितः समवेतः । उचिर्य समवायने इत्यस्य क्ते रूपम् । "हस्तसंवाहनं कुर्यात् श्रमापनुत्तये तत" इति कामशास्त्रम् । तथा सरसकदलीस्तम्भगौरः रसयुक्तरामकदलीप्रकाण्डवद् गौरः पाण्डरः, वस्त्रावृतत्वादीषत् पाण्डुरित्यर्थः । कनककदलीति पाठे कनककदली कदलीविशेषस्तद्वद् गौरः पीतवर्णः, 'तन्वी श्यामे'त्यत्र श्यामा स्त्रीविशेषः ननु श्यामवर्णेति पीतवर्णत्वे विरोधाभावः । करोः पीतवर्णत्वेन तस्याः पीतवर्णत्वं सूचितमिति व्याचक्षते । कनककदलीति पाठे तन्वी श्यामेत्यत्र तस्या उत्तमश्यामत्वं बोध्यमित्यन्ये । करोः सव्यत्वमाक्षेपलभ्यमिति वामः शोभन इति व्याचक्षते केचित् । "पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम्" इत्यमरः । स्वभावोक्तिरलङ्कारः ॥ ९५ ॥

तस्मिन् काले जलद यदि सा लब्धनिद्रासुखा स्या-
त्तत्रासीनः स्तनितविमुखो याममात्रं सहेथाः ।
मा भूदस्याः प्रणयिनि मयि स्वप्नलब्धे कथञ्चित्
सद्यः कण्ठच्युतभुजलताग्रन्थि गाढोपगूढम् ॥९६॥

अभिलाषात् प्रार्थनां कुर्वाण आह । तस्मिन् । हे जलद मेघ, तस्मिन् काले त्वदुपगमनसमये सा मत्प्रिया, यदि लब्धनिद्रासुखा लब्धं प्राप्तं निद्रया सुखं निद्रैव सुखं वा यया, तादृशी स्यात् भवेत्, तदा तत्र पूर्वोक्तस्थाने वातायनसन्निधौ, आसीनः उपविष्टः सन्, स्तनितात् गर्जितात्, विमुखः पराङ्मुखो निवृत्तो निःशब्दः सन्, याममात्रं प्रहरमेकं यावत्, सहेथाः प्रतीक्षिष्यसे । किं प्रयोजनमित्याह, कथञ्चित् कष्टसृष्ट्या, स्वप्नलब्धे निद्रामिलिते, प्रणयिनि प्रेमवति मयि, अस्या मत्कान्तायाः गाढोपगूढं दृढालिङ्गनं, सद्यस्तत्क्षणात् कण्ठच्युतभुजलताग्रन्थि मा भूत्, भुजावेव बाहू एव लते वल्लयौ तयोर्ग्रन्थिर्बन्धोऽन्योन्यमिलनं, कण्ठात् गलात् च्युतः स्रस्तो यस्य, तथाभूतं मा भूत् न भविष्यति । जलदेति सम्बोधनात् परोपकारध्वनिना प्रार्थनेऽवश्यकर्तव्यत्वं सूचितम् । स्यादिति सम्भावनायां लिङ्; सा हि विरहज्वरान्न निद्रात्येव, यदि कथञ्चिदुपभोगानुस्मरणान्निद्राति तदा मदालिङ्गनादिपरैवेति भावः, अत एव प्रार्थये याममात्रं सहेथा इति, प्रार्थने लिङ्, याममात्रमित्यनेन पूर्वं प्रहरव्यापी सम्भोगोऽस्येति सूचितम् । किंवा निर्भरसुखानुभवार्थं यामग्रहणम् । रूपकगर्भा स्वभावोक्तिरियम् ॥९६॥

तामुत्थाप्य स्वजलकणिकाशीतलेनानिलेन
प्रत्याश्वस्तां सममभिनवैर्जालकैर्मालतीनाम् ।
विद्युद्गर्भः स्तिमितनयनां त्वत्सनाथे गवाक्षे
वक्तुं धीरः स्तनितवचनैर्मानिनीं प्रक्रमेथाः ॥९७॥

इदानीं प्रहरप्रतीक्षानन्तरं यत् कर्त्तव्यं तदुपदिशन्नाह । तामु । धीरध्वनितवचनैर्मन्दगर्जितरूपवाक्यैस्तां मानिनीं मानवतीं मत्कान्ताम् उत्थाप्य प्रबोध्य, त्वं वक्तुं कथयितुं प्रक्रमेथा आरभस्व । शोकसन्तप्ता कथं बोध्यतीत्याह, स्वजलकणिकाशीतलेन निजतोयलवशिशिरेण, अनिलेन वातेन अभिनवैर्नूतनैर्निकाशोन्मुखैर्मालतीनां जातीनां जालकैः कोरकैः, समं सह, प्रत्याश्वस्तां सुखखेदाम् । गृहान्तर्गतां विदूरवर्तिनीम् अनवधानां कथं वदिष्यामीत्याह त्वत्सनाथे, त्वया ससहाये अधिष्ठिते, गवाक्षे वातायने, विद्युत्कम्पस्तिमितनयनां विद्युत्कम्पेन चलनेन स्तिमिते निश्चले नयने लोचने यस्यास्तादृशीम् । उत्थाप्येत्यत्र वक्तुमित्यत्र च धीरध्वनितवचनैरित्यस्य सम्बन्धो बोध्यः । स्वजलकणिरेत्यादिना यथा जलकणिकाशीतलाल्पवातेन मालतीजालक प्रत्याश्वसिति तथा तदनुरूपं वातसर्पमनुष्ठेयं नाधिकमिति सूचितम्, किंच मालतीजालिकावत् सौकुमार्यमस्या इति । किंच मालतीनिदर्शवेष्टितं किल तदायतनं बोध्यमिति । अन्येषामपि त्वं सन्धुक्षणकारी यथा मालतीनामिति । ननु नवो वातो विरहिदुःखदः, उक्तञ्चानेनापि मेघालोके भवति सुखिन इत्यादि, तत् कथं तेन प्रत्याश्वासोऽस्या ? प्रियागमप्रत्याशया आश्वासो बोध्यः । उक्तगानेनैव प्रत्ययादाश्वसत्व इति । किंवा पूर्वानुभूतसंगमयोः स्मृ; पूर्वं हि रतिक्लान्तिशान्तिः शीतलवातेन जनिता । विद्युत्कम्पस्तिमितनेत्रत्वे तदभिमुखध्वनि । प्रबलगर्जितेन चमत्कृतिः स्यादित्युक्तं धीरध्वनितवचनैरिति । "धीरो धैर्यान्विते मन्दे" इति धरणिः । हे धीर सावधानेति सम्बोधनं वा । धीरस्तनितवचनैरिति क्वचित् पाठः । धीरध्वनितवचन इति पाठे मन्दगर्जितवाक्य, सन् त्वम् । धीरध्वनितवचनमिति पाठे क्रियाविशेषणम् । मानिनीमिति, "मानश्चित्तसमुन्नतिः" स नियमतिशयितो वाविशतेऽस्या इति दर् । सा हि मानशालिनीत्वात् सागरव्यलीकमपि न सहते, अतोऽवधानेन वदिष्यसीत्याकूतम् । "मानश्चित्तोन्नती ग्रहे" इति विश्वः । मानपूजायामित्यतो यदि मानः पूजा, तद्युक्तां मानिनीं पतिमानात् पूज्यामित्यर्थं इति च व्याचक्षते । 'प्रक्रमेथा इति प्रोपाभ्यामारम्भे' इत्यात्मनेपदम् ॥९७॥

भर्तुर्मित्रं प्रियमविधवे विद्धि मामम्बुवाहं
तत्सन्देशान्मनसि निहितादागतं त्वत्समीपम् ।
यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानां
मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि ॥९८॥

"न तस्य भ्राम्यतां यस्तु शब्दं स्यात्लोकसम्मतं ।
भगिनी भगवतीत्यादि सर्वत्रैवानुमन्यते" इति ॥

विद्धि मामित्यत्र तमिति गम्यते यत्तदोर्नित्यसम्बन्धात्। तत्सन्देशादिति हेतौ पञ्चमी, किंवा षष्ठ्यर्थे, तत्सन्देश राशिरित्यर्थः । मनसि निहितादित्यनेन तेन यदुक्तं तन्मनसि यत्नेन धृतं तत्प्रियत्वात्, न तु विस्मृतमिति सूचितम्। यो वृन्दानीत्यादिना प्रोषितभर्तृकाणामहमुपकारी, त्वामपि संवादेनोपकरिष्यामीति सूचितम्। केचित्तु, पथि श्राम्यतां विश्रामं कुर्वताम्, उपसर्गं विनापि श्रमैर्विश्रामार्थतेत्याहुः । मन्द्रस्निग्धैरित्यनेन कामोद्दीपकता सूचिता। कान्ते प्रोषिते स्त्रीभिर्वेणी बध्यते प्रवासादागत्य कान्तेनैव सा मोक्ष्यते इति अबलावेणिमोक्षोत्सुकानीत्युक्तम्। प्रेयोऽलङ्कारः, यदुक्तं, 'प्रेयः प्रियतराख्यान'मिति ॥९८॥

इत्याख्याते पवनतनये मैथिलीवोन्मुखी सा
त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्य सम्भाव्य चैव ।
श्रोष्यत्यस्मात् परमवहिता सौम्य सीमन्तिनीनां
कान्तोदन्तः सुहृदुपगतः सङ्गमात् किञ्चिदूनः ॥९९॥

असम्भावना-मिथ्याज्ञानेन सा विगलनवधाना भविष्यतीत्याह । इत्या । हे सौम्य सच्चरित, इत्येवं भर्तुर्मित्र-मित्यादिना प्रकारेण, आख्याते उक्तवति, प्रकृतत्वात् त्वयि, उन्मुखी ऊर्ध्वमुखी त्वदभिमुखमुन्नमितवदना सती, उत्कण्ठोच्छ्वसितहृदया उत्कण्ठया उत्कलिकया उद्वेगेन उच्छ्वसितमुत्फुल्लितं हृदयं चित्तं यस्यास्तादृशी सा मत्कान्ता त्वां वीक्ष्य विशेषेणावलोक्य, सम्भाव्य स्वागतं भवत इत्यादिना आदृत्य च, अस्मात् प्रत्यक्षीभूताद् भवतः, परमत्यर्थम् अवहिता सावधाना सती, श्रोष्यति त्वदुच्यमानवार्तामित्यर्थः। यथा पवनतनये हनूमति विषये, उन्मुखी उत्कण्ठोच्छ्वसितहृदया मैथिली सीता शुश्राव अर्थात् रामवार्ताम्। कथमेवमवधेय भविष्यतीत्याह, सीमन्तिनीनां स्त्रीणां सुहृदा बन्धुना, उपगतः आनीतः, कान्तोदन्तः प्रियवार्ता, सङ्गमात् सम्मिलनात् किञ्चिदूनः अल्पहीनः सङ्गमप्राय इत्यर्थः । आख्यात इति आरम्भे कर्तरि क्तः । किंवा कर्मणि क्तः, इति पूर्वोक्ते आख्याते त्वया उक्ते सतीति योज्यम्। पवनतनयमिति पठित्वा हनूमन्तं वीक्ष्य सम्भाव्य च मैथिलीवेति व्याचक्षते केचित्। चैव शब्दौ समुच्चयावधारणार्थौ। अस्मात् परं सम्भाषणादनन्तरमिति च व्याचक्षते। सौम्यसीमन्तिनीनामिति समस्तं सुचरितस्त्रीणामिति च व्याचक्षते। श्लेषोपमार्थान्तरन्याससङ्कीर्णमिदम् ॥९९॥

सर्वं भविष्यतीति भावः, आयुष्मन्निति धर्मविघ्ननिवृत्तये दीर्घायुष्ट्वाशंसनम्, कनिष्ठभ्रातृत्वसूचनेन वचनकरत्वसूचनार्थं वा। मम चात्मनश्च वचनादित्यनेन विकलतया यन्मया वक्तुं विस्मृतं तदपि त्वया दृष्टावस्थं वक्तव्यमिति ज्ञापितम्। चद्वयमुभयप्राधान्यार्थम्। सहचर इत्यनेन सदा तदासक्तता सूचिता। रामगिर्याश्रमस्थ इत्यनेन पुण्याश्रमेषु व्रतचर्यापर एवास्ते न त्वन्यासक्त इति ध्वनितम्। एवं रामगिरिस्मारणेन यथा रामविरहात् सीतया जीवनं धृतं तथा त्वयापि धार्यमिति च। अव्यापन्न इत्यनेन अविनष्टः कष्टस्पष्टा जीवतीति सूचितम्। अबले इति युक्तपदं, विरहवेदनया दौर्बल्यस्य ख्यापनात्। "युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु"ति, "करणं साधकतमक्षेत्रगात्रेन्द्रियेष्वपी"ति चामरः। तामेव ब्रूया इति एतस्मान्मां कुशलिनमित्यादिश्लोकपर्यन्तं सम्बन्धनीयम् ॥१००॥

अङ्गेनाङ्गं सुतनु तनुना गाढतप्तेन तप्तं
साश्रेणाश्रुद्रुतमविरतोत्कण्ठमुत्कण्ठितेन।
दीर्घोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्ती
सङ्कल्पैस्ते विशति विधिना वैरिणा रुद्धमार्गः ॥१०१॥

सम्प्रति सङ्कल्पालिङ्गनसन्देशमाह। अङ्गेनाङ्गं। तव सहचरः सङ्कल्पैर्मानसकर्मभिर्भावनाभिः, अङ्गेन स्वकीयेन शरीरेण, ते तव, अङ्गं शरीरं, विशति प्रविशति आलिङ्गतीत्यर्थः, तामेवं ब्रूया इति सम्बन्धः। अङ्गेन कीदृशेन? तनुना क्षीणेन, तथा गाढमत्यन्तं, तप्तेन सन्तापयुक्तेन, तथा साश्रेण सनेत्रजलेन, तथा उत्कण्ठितेन उत्कण्ठायुक्तेन, तथा समधिकतरोच्छ्वासिना अतिशयितोर्ध्वश्वासयुक्तेन। कीदृशं तवाङ्गम्? सुतनु अतिकृशम्, तथा तप्तं तापयुक्तम्, तथा अश्रुद्रुतं बाष्पप्लुतम्, तथा अविरतोत्कण्ठं सततोत्कण्ठायुक्तम्, तथा दीर्घोच्छ्वासं प्रबलोर्ध्वश्वासम्। द्वयोरङ्गसाम्येन तुल्यानुरागित्वं दर्शितम्, सङ्कल्पैः कथं विशति कथं नोपैतीति निराकर्तुमाह, स कीदृशः? दूरवर्ती दूरस्थः। कथमुत्कण्ठितो नागच्छतीति निरावर्तुमाह, वैरिणा प्रतिकूलेन, विधिना रुद्धमार्गः आवृतवर्त्मा। केचित्तु हे सुतनु सुगात्रि विरहेणातिक्षीणे चेति व्याचक्षते, तन्न हृद्यं प्रक्रमभङ्गात् ॥१०१॥

स्त्वल्पतृष्णायो" रिति कोषः । ननु श्रवणविषयमतिक्रान्ता इत्यनेनैवादर्शत्वसिद्धेर्लोचनाभ्यामगम्य इति व्यर्थं नच वाच्यमुक्तिपोषालङ्कारसूचकत्वात्; तथाहि, "उक्तिपोष. क्वचिद्धेतोः फलभावेन कीर्तनम्। क्वचिदाक्षेपसिद्धस्य साक्षाच्छब्देन कीर्तन"मिति। किंवा लोचनाभ्यामगम्यस्य रवः श्रूयते, श्रुतिविषयमतिक्रान्तोऽपि दृश्यते इति द्वयमुक्तम् अतिदूरस्थोऽयमिति भावः । लोचनाभ्यामदृश्य इति पाठे मनसा दर्शनमस्तीति भावः, लोकोक्तिरप्येतादृशी । आहेति वर्तमाने भूतेऽपि प्रयुज्यते इति वृद्धाः । हेतुगर्भोत्तमनायकत्वभावोक्तिरियम् ॥१०२

श्यामास्वङ्गं चकितहरिणीप्रेक्षिते दृष्टिपातं
गण्डच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्
हन्तैकस्थं क्वचिदपि न ते चण्डि सादृश्यमस्ति ॥१०३॥

इदं किमिति दशभिः श्लोकैः कामावस्थां वर्णयन्नाह । श्यामा । हे चण्डि सुभगे, ते तव, अङ्गं शरीरम्, श्यामासु श्यामलतासु, उत्पश्यामि उत्प्रेक्षे, तदेवेदमङ्गमीदृक् सम्पन्नमिति मोहान्मन्ये, किंवा अङ्गशब्दोऽयं तात्स्थ्यादङ्गे वर्तते, मञ्चाः क्रोशन्तीतिवत्, तेनाङ्गश्यामलत्वं श्यामासूत्पश्यामि, श्यामासु प्रियंगुष्वित्यन्ये । एवं चकितहरिणीप्रेक्षिते सभयविस्मितमृगीप्रेक्षणे, तव दृष्टिपातान् कटाक्षान् उत्पश्यामि, एवं शशिनि चन्द्रे, तव गण्डच्छायां कपोलस्थलशोभाम् उत्पश्यामि, गण्डस्थलकान्तिश्चन्द्रवद्वर्ण्यते एव; तथाहि—"ततः कुमुदनाथेन कामिनीगण्डपाण्डुने"ति । एवं शिखिनां मयूराणां, बर्हभारेषु पुच्छकलापेषु, तव केशान् कुन्तलान् उत्पश्यामि । यद्यपि बर्हशब्देनैव मयूरपिच्छमुच्यते तथापि शिखिनामिति तत्र स्थित्यर्थमुक्तम् । एवं प्रतनुषु अल्पासु, नदीवीचिषु सरित्तरङ्गेषु, तव भ्रूविलासान् भ्रूक्षेपान् उत्पश्यामि । हन्त खेदे । किन्तु एकस्थम् एकस्थानस्थितं तव सादृश्यं साम्यं क्वचिदपि नास्ति । "चण्डी स्यात् कोपना योषित् तथा सौभाग्यशालिनी"ति बलः । चण्डि मानिनीत्यादिसम्बोधनानि सौभाग्यप्रकाशकानि, यथा रघुकाव्ये । 'करेण वातायनलम्बितेन स्पृष्टस्त्वया चण्डि कुतूहलिन्ये"ति । तथा, "एतन्मुनेर्मानिनि शातकर्णे" रितीति रक्षितादय आलङ्कारिकाः । टीकान्तरे ननु स्वेच्छया यदि दर्शनं न ददाति तदा चण्डीति सम्बोधनं युक्तम्, न चात्र तथा, तत् कथं चण्डीत्युक्तम्? उच्यते, एकत्र क्वचिदपि त्वया सादृश्यं नारोपितमिति कुपिता सम्भाव्यसे इति चण्डीत्युक्तम्, पूर्वमपि त्वया कोपमात्रेणाकारगुप्तिः कृतेति भावः । उत्कण्ठाविरचितपद्यमेतत्, व्याजाद् गुणकीर्तनं नाम कामावस्थेयम्, यदाह,—

"अङ्गप्रत्यङ्गलीलाभिर्वाक्चेष्टाहसितेक्षितैः ।
नास्त्यन्यः सदृशस्तेन भणितं गुणकीर्तनम् ॥" इति ।

प्रेयोव्याजस्तुत्याक्षेपाणां सङ्करः । तथाच—"प्रेयः प्रियतराख्यान"मिति,

"यदि निन्दन्निव स्तौति व्याजस्तुतिरसौ मता ।
दोषाभासा गुणा एव लभ्यन्ते यत्र सन्निधिम् ॥"
"प्रतिषेधोक्तिराक्षेपस्त्रैकाल्यापेक्षया त्रिधे"तीति ॥ १०३ ॥

धारासिक्तस्थलसुरभिणस्त्वन्मुखस्यास्य बाले
दूरीभूतं प्रतनुमपि मां पञ्चबाणः क्षिणोति ।
घर्मान्तेऽस्मिन् विगणय कथं वासराणि व्रजेयु-
र्दिक्संसक्तप्रविरलघनव्यस्तसूर्यातपानि ॥१०४॥

कामपञ्चबाणहतस्य त्वद्रहितस्य ममैतद्दर्पाभासराणि गच्छन्तु एतन्निष्कृतौ त्वां प्राप्स्यामीति वैक्लव्य सन्दिश्न्नाह । धारा । हे बाले, पञ्चबाण काम धाराभि सिक्तमुषित, यत् स्थल तद्वत् सुरभिण सुगन्धिनोऽस्य त्व मुखस्य, दूरीभूत दूरस्थम् अत एव प्रतनुमपि अतिदूरामपि मा क्षिणोति हिनस्ति, घर्मान्ते ग्रीष्मावसाने वर्षाप्रारम्भे, दिक्षु सक्त सलग्न, प्रविरल इतस्तत स्थितो यो घनो मेघस्तेन व्यस्त खण्डखण्डीकृत सूर्यातपो येषु तादृशानि वासराणि दिवसानि, मे मम, कथ केन प्रकारेण, व्रजेयुर्यास्यन्ति, इति त्व निगणय अवधारय भावय । ननु धाराशब्दो सुरभित्व नास्ति, बिन्दुल्पवर्षे हि तद्भवति, कथ धारेत्युक्तम् ? उच्यते, अल्पवर्षणार्थ सिक्तग्रहणम्, अन्यथा धारापातेति कृत स्यात्, धाराभिरसिक्तम् अपसिक्तम्, अन्यार्थे नञ् इति व्याख्येयम् । नयनसलिलस्मरणाद्धि धाराग्रहणम् । असेति स्मृत्युपनततत्वेन प्रलक्षीकृतत्वादुक्तम् । बाले इति सम्बोधनात् नित्योपभुज्यमानतयातिशयानुरागध्वनि । यदुक्त नागरसर्वस्वे,

> "सतत भुज्यमानापि बाला वर्धयते बलम् ।
> क्षय नयति योग्या स्त्री प्रौढा तु कुरुते जराम् ।" इति ।

"बालेति गीयते नारी यावत् षोडशवत्सर" मिति च । पञ्चबाण इत्यनेन पञ्चभिरेव बाणैर्निघ्नन्तीति सूचितम् । एव प्रतनुमित्यनेन एकबाणासहेऽपि मयि पञ्चबाणाना क्षेप इति, तेन च गाढ पीडेति ।

ननु आषाढेऽनेन मेघो दृष्ट, स च घर्म एव नतु घर्मान्त ? उच्यते, घर्मदिनेभ्यो घर्मान्तदिनानि दु सहानीति तदपेक्षया नोक्त तद् तापेक्ष्यैवोक्तम् । कौमुदीकारस्त्वाह, गङ्गाया दक्षिणे रामगिरिप्रदेशे अन्या ऋतुव्यवस्था, वैशाखज्यैष्ठौ वैघर्म आषाढश्रावणौ वर्षा, यदुक्त—

> "शिशिर सुरभिर्घर्म प्रावृट् शरद्धिम क्रमात् ।
> ऋतव पौषमारभ्य द्वौ द्वौ मासौ हि दक्षिणे ॥" इतीति ।

केचित्तु अत स्वल्पे घर्मे इत्यर्थ, अत एव घनस्य प्रविरलतोक्तेत्याहु, तन्न द्वयम् । निगणयेत्यत्र वाक्यार्थस्य कर्मता । ननु वर्षे मेघो व्यापक एव भवति नतु विरल, कथ प्रविरलेत्युक्तम् ? उच्यते, एवम्भूतस्य दिनस्य दु सहत्वाद् यदैव भवति तदेति बोध्यम् । विरल विरलतादिक सक्त विरल यस्येति कर्मप्रधानेन समास । किंवा क्वचिद्दिक्षु सम्यग्व्यापकत्वेनासक्त क्वचित्प्रविरल इति । प्रविरलेत्यत्र प्रवितलेति पाठे आदौ दिक्संसक्त पश्चात् प्रविनत इतस्ततो गत । स्वभावाख्यानमिदम् । दिक्संसक्तेत्यनेन दिशां नायिकात्वं घनानां नायकत्व व्यज्यते, तद्विलासान् दृष्ट्वा कथ प्राणान् धारयिष्यामीति भाव । एवं मेघा सूर्यातपमचेतनमपि व्यस्तीकुर्वन्ति सुतरां सचेतन मा व्यस्तीकरिष्यन्तीति भाव ॥ १०४ ॥

दृष्टिरालुप्यते आच्छाद्यते। अतः क्रूरः पापकर्मा दारुणः, कृतान्तो दैवं विधाता वा, तस्मिन्नपि चित्रेऽपि, नौ आवयोः सङ्गमं पादप्रणामेन मिलनं, न सहते न क्षमते।

ननु आलिख्येत्यनुपपन्नम्, यतो लिखनकाल एवास्यास्ते दृष्टिरालुप्यते इत्यर्थः। अन्ये तु पूर्वार्धे कष्टसृष्ट्या लिखननिर्वाहो ज्ञापित, किन्तु चरणपतनकाले दृष्टिलोप इत्याहुः। प्रणयकुपितामिति कुपितप्रमदा प्रबलकामा भवतीत्युक्तम्। यदुक्तं,—

"कुपितास्वनुनीतासु प्रथमोपगतासु च।
विरहाद्विधुरास्चैव कामः पुष्पवतीषु चे"ति ॥

धातुरिह हिंगुल-हरिताल-मनःशिला-गैरिक-कठिन्यादि, अत एव रागैरिति बहुवचनम्, युक्तञ्चैतत्, यतः कोपेन वपुः स्थानभेदान्नानाकारं जायते। यदुक्तं—

"दृशि लोहितः कपोले विपाण्डरस्त्वधरेऽरुणरागश्च।
स्वेदोत्कम्पौ स्त्रीणां कोपवशादधिकम्पौ स्त इति ॥"

"तावन्मानो हि मानिन्या यावन्नेष्टः पदे पते" दित्युक्तं चरणपतितमिति। मुहुरुपचितैरित्यनेन कदाचिदश्रु-मार्जनं कृत्वा त्वां लिखामि पश्यामि प्रसादयामीति मनसि क्रियते, तदपि न सम्पद्यते, अश्रुणोऽनुक्षण पतनात् प्रमार्ष्टुं न शक्यते इति सूचितम्। विधाता न सहते इति लोकोक्तिः। "कृतान्तो वेधसि प्रोक्तो यमेऽकुशलकर्मणी" ति ब्रल.। "कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु" इत्यमरः। कृतान्तपदेन यमोपस्थिते विधेर्यमतुल्यतया प्राणग्राहकत्वेनातिपीडा सूचितेति केचित् ॥ १०५ ॥

मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-
र्लब्धायास्ते कथमपि मया स्वप्नसन्दर्शनेषु।
पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां
मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति ॥१०६॥

मम दुःखदर्शनाद्वनदेवता अपि कारुणिकतया रुदन्तीत्याह। मा। कथमपि दैवयोगात्, स्वप्नसन्दर्शनेषु लब्धायाः प्राप्तायास्ते तव निर्दयाश्लेषहेतोर्गाढालिङ्गननिमित्तम्, आकाशप्रणिहितभुजं शून्यप्रसारितबाहुं, मां पश्यन्तीनां स्थलीदेवतानाम्, मुक्तास्थूलाः मौक्तिकवत् पृथवोऽश्रुलेशाः नेत्रजलबिन्दवः, तरुकिसलयेषु वृक्षपल्लवेषु, खलु, बहुशो वारंवार, न न पतन्तीति, अपि तु पतन्त्येव। खलु सम्भावनायाम्, तासामश्रुपातः सम्भाव्यते इत्यर्थः। द्वौ निषेधौ प्रकृतमर्थं गमयत इति वृद्धाः, सम्भाव्यप्रतिषेधनिवर्तने द्वौ प्रतिषेधाविति वामनः ॥ १०६ ॥

दक्षिणस्यां दिशि, प्रवृत्ताः कृतगमनारम्भास्ते तुषाराद्रिवाता इति हेतोर्मया आलिङ्ग्यन्ते आश्लिष्यन्ते ससेव्यन्ते स्पृश्यन्ते इति यावत्। इति किमित्याह, किल सम्भाव्यते, यदि कदाचित्, तवाङ्गम् अवयव, एभिर्वातैः, पूर्वं प्राक् स्पृष्टं सम्पृक्तं भवेदिति, त्वदङ्गस्पर्शित्वेनैषामुपस्पर्शवासनयालिङ्गन न तु तापापगमार्थम्। एतेन विरहे वातसेवनानौचित्यं परिहृतम्। अत्र वातानां हिमाचलागतत्वेन शैत्य, पल्लवपुटभेदेन मान्द्यम्, देवदारुक्षीरस्रुतिसम्पर्केण सौरभ्यं गुणत्रयं व्यक्तमेवोक्तम्। दक्षिणेनेति सप्तम्यामेनादेशः। गुणवतीति सम्बोधनेन सदा तद्गुणस्मरणेन विरहपीडाधिक्यं सूचितम् ॥१०७

संक्षिप्येत क्षण इव कथं दीर्घयामा त्रियामा
सर्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात्।
इत्थं चेतश्चटुलनयने दुर्लभप्रार्थनं मे
गाढोष्माभिः कृतमशरणं त्वद्वियोगव्यथाभिः ॥१०८॥

दुर्लभप्रार्थनत्वमुपदर्शयन् गाढविरहपीडामाह। सक्षि। हे चटुलनयने विलोलविलोचने, दीर्घाश्चिरावलम्बिनो यामाः प्रहरा यस्यास्तादृशी त्रियामा रात्रि, कथं केन प्रकारेण, क्षणमिव संक्षिप्येत अल्पा क्रियेत. एव अहरपि दिनमपि, सर्वावस्थासु पूर्वाह्णमध्याह्नापराह्णेषु मन्दमन्दोऽपटुतर आतप उद्द्योतो यस्य, तादृश कथं स्यात् भवेत्, इत्थम् अनेन प्रकारेण,दुर्लभा दुष्प्रापा प्रार्थना अभिलषितार्थो यत्र तादृशं मे मम चेतश्चित्त गाढोष्माभिस्तीव्रसन्तापाभिस्त्वद्वियोगव्यथाभिस्तव विरहपीडाभि, अशरणं रक्षकरहित कृतम्। दीर्घयामेति विरहावस्थाया दीर्घत्वप्रतिपादनात्, त्रियामेति युक्तपदम्, तदानीं रात्रेर्लाघवात्। अत्राय भाव, रात्रे संक्षेपाय दिनस्य मन्दातपत्वाय स्पृहयामि, एषा दुर्लभा प्रार्थना कथमुपपद्यते। रात्रिन्दिव विरहवेदना वर्धते इति। चटुलनयने इत्यनेन कदाचित् प्रिय आगच्छेदिति पथि प्रेरितनयनत्व सूचितम्। स्वभावाख्यानेन मनोहरता च। व्यथाभिरिति बहुवचनेनापि विरहपीडाधिक्य सूचितम् ॥१०८॥

नन्वात्मानं बहु विगणयन्नात्मनैवावलम्बे
तत् कल्याणि त्वमपि सुतरां मा गमः कातरत्वम्।
कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥१०९॥

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
मासानेतान् गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥११०॥

कस्यात्यन्तमित्यादि यदुक्तं तदेव प्रतिपादयन् शापावमानसमयस्मारणेन समाश्वासयन्नाह । शापान्तो । शार्ङ्गपाणौ विष्णौ, भुजगशयनात् सर्पशय्याया उत्थिते कृतोत्थाने सति प्रबुद्धे सति, अर्थादुत्थानैकादश्यां, तदानीमेव *वर्षस्य पूर्णत्वात् मे मम शापस्यान्तः परिसमाप्तिर्भविष्यति, अत एव एतान् चतुरो मासान् लोचने चक्षुषी मीलयित्वा निमील्य पिधाय त्वं गमय पश्चात् इतोऽनन्तरं सयोगे सति आवां त्वमहञ्च परिणता प्रौढा शरच्चन्द्रिका शरत्कालीनज्योत्स्ना यासु तादृशीषु क्षपासु रात्रिषु विरहे विच्छेदे गुणितम् एव कृत्वा कर्तव्यमिति बहुशश्चिन्तितम्, द्विगुणीकृतं वा तं तमनिर्वचनीयम् आत्माभिलाषं स्वकीयवाञ्छितं निर्वेक्ष्यावः उपभोक्ष्यावहे भुजगशयनेत्यादिना प्रियायां प्रबोधः सूचितः तथाहि यद् भवितव्यं तद् भवत्येव,—यदुक्तं —

'अवश्यमाविनो भावा भवन्ति महतामपि ।
नग्नत्वं नीलकण्ठस्य महाहिशयनं हरे" रिति ॥

विष्णोर्भुजगशय्या वर्षासु प्रतिवर्षमेवेति प्रसिद्धमिति भुजगशयनादित्युक्तं तथाच "नमो जलदनीलाय शेष-पङ्कजशायिने" इति केचित् । ननु विष्णोर्भुजगशय्या प्रलय एव ननु प्रत्यक्षम् उच्यते भुजगे हरिशयनं सुखा-लम्बन हेतुत्वात् इत्याह । मासानेतानित्यनेन अल्पविरहदिवसा भोग्याः सन्तीत्याससमभरत्वेन सदाश्वासन कृतं लोचने मीलयित्वेति तु लोकोक्तिरेषा । एतेन शापावसानदिवसं यत् कान्ता न जानाति अत एवानेनाभिज्ञानेन तत्प्रतीतिर्भविष्यतीति मेघो ज्ञापितः ॥ ११० ॥

